# कादम्बरी




## पूर्वभागः

महाकवि-श्रीबाणभट्टविरचितः ।



श्रीयुक्तगङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मजेन
शब्दाचार्य-पुराणशास्त्रि-सांख्यरत्न-
व्याकरणतीर्थ-काव्यतीर्थ-
स्मृतितीर्थ-
महोपदेशक-
श्रीहरिदाससिद्धान्तवागीश-भट्टाचार्य्येण
प्रणीतया कल्पलताभिधानया टीकया
वङ्गानुवादेन च समेतः ।



नकीपुर-हरिचरणचतुष्पाठीतस्तेनैव,
प्रकाशितश्च ।



१८३८ शकाब्दे सौरश्रावणस्य
प्रथमदिवसे ।

धर्म्मो नयश्च विनयश्च

विचारणञ्च

रूपं शुभञ्च चरितञ्च

मनस्विता च।

सम्मेलनेन सदसीव

सदा सदस्या

यस्मिन् गुणाः समुदिता

मुदिता इवासन् ॥

तस्य

खुलनाजिलाधीन-नकीपुरस्थ-भूस्वामिनः

राय ৺ हरिचरणचतुर्धुरीणरायवाहादुरस्य

पवित्रनामोद्देशे

समर्पितेयम्।

---

तत्स्मृतिसम्भ्रम-

श्रीहरिदासदेवशर्म्मणा

## विज्ञापनम् ।

अधुना किल करुणामयपरमेश्वरस्य प्रसादात् कादम्बरीमुद्रणं परिसमाप्तम् । अत्र किल विभिन्नदेशीयं पुस्तकत्रयमालोक्य समीचीनतया सम्मतः पाठो मूले सन्निवेशितः । पाठान्तराणि पुनरधस्तादिन्यस्तानि । समालोचना तु टीकायामेव कियती यथास्थानं प्रतिपादितेति न पृथक् सङ्कलिता । संशोधनाय कृतेऽपि विशेषयत्ने मुद्राकरप्रमादस्य सर्वथा दुर्निवारतया क्वचित् क्वचित् किञ्चिदशुद्धं परिलक्ष्यते । कागज इत्यस्य प्रायेण त्रिगुणाधिकमूल्यतया मूल्यातिरेकसम्भवेऽपि पाठार्थिनां सुविधाविधानाय प्रचलितनियमापेक्षया नितान्तमेव न्यूनं मूल्यं कल्पितम् । यदीदानीं शिक्षार्थिनः शिक्षयितारश्च पुस्तक-मिदमुपकाराय मन्यमाना गृह्णन्ति, तदेव मे वास्तविकप्राणान्तपरिश्रमः प्रचुरतरार्थव्ययश्च सफलो भवितेति ।

विनीत-श्रीहरिदासशर्म्मणः ।

## বঙ্গানুবাদ সম্বন্ধে বিশেষ বক্তব্য ।

যে কোন অনুবাদকেই তিন ভাগে বিভক্ত করা যায়, যথা,—উপাখ্যানানুবাদ, ভাবানুবাদ ও ভাষানুবাদ। তাহার মধ্যে অনুবাদক সম্পূর্ণ স্বাধীনভাবে চলিতে পারেন বলিয়া উপাখ্যানানুবাদ সর্ব্বাপেক্ষা সহজ ; কিন্তু তাহাতে মূল বুঝিবার পক্ষে বিশেষ কোন উপকার হয় না। মূলের ভাব নিয়া চলিতে হয় বলিয়া ভাবানুবাদ উপাখ্যানানুবাদ অপেক্ষা কঠিন ; তবে তাহাতে মূল বুঝিবার পক্ষে কিছু সুবিধা হয়। আর ভাষানুবাদ করা বড়ই কঠিন ; কারণ—ইহাতে অনুবাদককে মূলের ভাব ও ভাষা এই উভয়েরই সম্পূর্ণ অধীন হইয়া চলিতে হয় ; অথচ সেই ভাষানুবাদই মূল বুঝিবার পক্ষে অত্যন্ত উপযোগী। কিন্তু কাদম্বরীর সেই ভাষানুবাদ করা যে কি কঠিন ব্যাপার, তাহা বিবেচক অনায়াসেই বুঝিতে পারেন—এই জন্যই আমার কয়েকটি বন্ধু কাদম্বরীর ভাষানুবাদ করিতে নিষেধ করিয়াছিলেন ; আমি কিন্তু অদম্য উদ্যমের বশবর্ত্তী হইয়া তাহাতে সে সঙ্কল্প হইতে বিরত হই নাই ; তবে যেখানে উপায়ান্তর নাই, সেখানে ভাবানুবাদই করা হইয়াছে। কিন্তু এই অনুবাদে যে কত দূর কৃতকার্য্য হইয়াছি, তাহা পাঠকগণ বিবেচনা করিবেন। তবে বিশেষ বক্তব্য এই যে,—একানুপূর্ব্বীক-বাচক-বাচ্যস্বরূপ সামান্য ধর্ম্ম লইয়া গ্রন্থকার পূর্ণোপমা সাজাইয়া বাহবা লইলেন ; টীকাকার উভয় পক্ষেরই বিশদ ব্যাখ্যা করিয়া প্রশংসাভাজন হইলেন ; কিন্তু যত বিপদ ভাষানুবাদকের ; কারণ— "পুরমেতজ্জাতং সকলকলং সম্প্রতি সুধাংশুবিম্বমিব" এখানে 'এই বাড়ীটি এখন চন্দ্রমণ্ডলের ন্যায় কোলাহলে পরিপূর্ণ হইয়াছে' এইরূপ অনুবাদ করিলে যেমন সাদৃশ্য থাকে না, তেমন অনুবাদও অসম্পূর্ণ রহিয়া যায় ; সুতরাং বাধ্য হইয়াই এইরূপ অনুবাদ করিতে হইবে যে, 'এখন চন্দ্রমণ্ডলটি যেমন সকল-কলা-সমন্বিত এই বাড়ীটিও তেমন কোলাহলে পরিপূর্ণ হইয়াছে।' সুতরাং সাদৃশ্য রহিল না বলিয়া অনুবাদককে অবশ্যই সাধারণে উপহাস করিতে পারে ; কিন্তু বিবেচক পাঠক উপহাস করিবেন না—এ আশা খুব করা যায় ; কারণ—ঐরূপ স্থলে উপায়ান্তর নাই বলিয়া অনুবাদে সাদৃশ্য না থাকা ক্ষমার যোগ্য। কাদম্বরীতে এরূপ পূর্ণোপমা অনেকই আছে, সুতরাং তাহার ভাষানুবাদও ঐরূপই হইয়াছে ; তাই এই বিষয়ের অবতারণা করা হইল।

# सूचीपत्रम् ।

## अथ बाणभट्टस्य संक्षिप्तजीवनचरितम् *

### समयनिरूपणञ्च ।

आसीत् पुरा कान्यकुब्जप्रदेशे शोणनदस्य पश्चिमे भागे प्रीतिकूटनामा ग्रामः । तत्र वात्स्यगोत्रसम्भवः परमवेदविद्वैदिकक्रियानिपुणश्च कुबेरनामा कश्चित् पण्डितप्रवरो बभूव । तस्य पुत्रः पाशुपतः † तदात्मजश्चार्थपतिस्तस्य चैकादश ‡ पुत्रा आसन्, तेषामष्टमश्चित्रभानुस्तु राज्यदेव्यभिधानायां भार्य्यायामस्माकं महाकविमुकुटमणिं बाणं नाम पुत्रं लेभे । बाणस्य तु शैशव एव राज्यदेवी परलोकं गता । अथ चित्रभानुरेव तं बाणं मातृवत् परिपोषयन् यथाविधि संस्कृत्य तस्य चतुर्द्दशवर्षे वयसि लोकान्तरमगमत् । ततस्तु यौवनस्वभावसुलभदोषेण साहचर्य्यदोषेण च दूषितो बाण ईशानप्रभृतिभिः प्रियसहचरैः स्वदेशान्निर्गतो विविधान् देशान् पर्य्यटन् अनेकैर्नृपतिभिर्बहुभिश्चोपाध्यायैः सह साक्षात् कुर्वन् विविधं ज्ञानमुपार्ज्य पुनः स्वदेशमागतः । अथ कदाचित् कान्यकुब्जेश्वरो हर्षवर्द्धनो दूतमुखेन बाणमाहूतवान् । उपस्थिते च बाणे राजा दुर्जनेभ्यः श्रुततद्दुश्चरितः "महाभुजङ्गः § खल्वयमागतः" इति कश्चन सदस्यं प्रत्यभिदधौ । तेन चापमानमात्मनो मन्यमानो बाणः "निजविचारेण निर्णीयतां सर्वम्" इत्यभिधायावतस्थे । परन्तु सभासद्भिः सुधीभिः सह शास्त्रतर्के तं महाविचक्षणतया परिचिन्वानो राजा स्वसभायां प्रधानोपाध्यायपदमध्यारोपयामास । तस्य च सभायां सूर्य्यशतकरचयिता मयूरभट्टो मातङ्गदिवाकरनामापरश्च कविरासीत् । अथ कदाचिद्बन्धुभिरनुरुद्धो बाणो हर्षचरितं नाम हर्षवर्द्धनस्य जीवनचरितं प्रणीय दृश्यमानांशान्तं कादम्बरीपूर्वभागं प्रणयन्नेव परलोकं गतः । अथ तु बाणनन्दनो भूषणभट्टो नाम कादम्बर्य्याः परभागं प्रणीतवान् ।

हर्षवर्द्धनस्तु ६०६ खृष्टाब्दमारभ्य ६४८ खृष्टाब्दपर्य्यन्तं कान्यकुब्जराज्यं शशास ; ¶ सुतरां खृष्टीयषष्ठशताब्दीशेषभागात्तदीयसप्तमशताब्दीपूर्वार्द्धपर्य्यन्तो बाणभट्टस्यावस्थितिसमयो निर्णीयत इति ।

---

* हर्षचरितस्यानुक्रमणिकायामिदं दृश्यते ।

† बाणस्तु कादम्बर्य्यां निजवंशवर्णने नामेदं नाभिहितवान् ।

‡ "सोऽजनयद् भृगुं हंसं शुचिं कविं महीदत्तं धर्म्मं जातवेदसं चित्रभानुं त्र्यक्षं अहिदत्तं विश्वरूपञ्चेत्येकादश रुद्रानिव सोमामृतरसशीकरच्छुरितमुखान् पवित्रान् पुत्रान् ।" हर्षचरितम् ।

§ भुजङ्गः षिङ्गः पारदारिक इति यावत् ।

¶ चीनदेशीयपरिव्राजकस्य हियुयेनसाङ्गस्य भारतपरिभ्रमणवृत्तान्तादिदं लभ्यते । अत्र त्वपराण्यपि सन्ति युक्तिप्रमाणानि ।

## अथ बाणभट्टस्य वंशावली ।




* केषाञ्चिन्मते 'भूषणबाणः' अपरेषां मते 'पुलिन्दः' तदन्येषाञ्च मते 'पुलिनः' इति बाणभट्ट-तनयस्य चत्वारि नामानि परिलक्ष्यन्ते ।

# अथ कादम्बरीकथासंक्षेपः ।

आसीत् किल विदिशाभिधानायां राजधान्यामशेषगुणाकरो राजा शूद्रको नाम। तत्रैकदा सभामण्डपगतं परमरूपवती प्रतीहारी कस्याश्चिच्चाण्डालदारिकाया आगमनं न्यवेदयत्। अथ राजादेशेन प्रतीहारी प्रवेशिता सा केनचिद्वृद्धेन शिशुना च सममागत्य राजानं प्रणनाम। वृद्धस्तु पञ्जरगतं वैशम्पायननामानं शुकमेकमवस्थाप्य विहत्य च तदीयगुणावलीमपससार। अपसृते च तस्मिन् वैशम्पायनो दक्षिणं चरणमुत्तोल्य

"स्तनयुगमश्रुस्नातं समीपतरवर्त्ति हृदयशोकाग्नेः। चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम्।"

इत्युक्त्वा राजानं संवर्द्धयामास। राजा तु सह सदस्यैर्निरतिशयं विस्मयमापन्नः शुकमन्तःपुरं प्रवेशयितुमादिश्योदतिष्ठत्। कृतस्नानाह्निकभोजनश्च बृहस्पतिकल्पेन कुमारपालितनाम्ना मन्त्रिवरेण सह सुखोपविष्टस्तं शुकमानाय्य तदीयं सर्ववृत्तान्तमभिधातुमनुरुरोध। अथासौ कथयामास—"अस्ति विन्ध्याटवी नाम काचिदरण्यानी। तत्रैकस्मिन् विशाले शाल्मलीवृक्षे मां प्रसूय परलोकं गतायां मे जनन्यां जराजीर्णो जनको मामपालयत्। कदाचित्तु मातङ्गनामनि शबरसेनापतौ प्रस्थिते तत्सेनान्तर्गतः कश्चिद्वृद्धशबरस्तं शाल्मलीतरुमारुह्य पक्षपुटेन मामावृण्वन्तं पितरं मे गतासुं विधाय शुष्कपर्णपुञ्जोपरि समपातयत्। अहन्तु भाग्यवशाज्जीवितो जलमन्विष्यन् चलितो मुनिकुमारेणासाधारणमहिम्ना हारीतनाम्ना स्वपितुर्महर्षेर्जाबालेराश्रममुपनीतः। स तु महर्षिर्मामवलोक्य हसन् पृष्टश्च मुनिभिः कृतकृत्यो रात्रौ सविस्तरमुवाच। (कथामुखम्)।

"आसीदवन्तीदेशे राजधान्यामुज्जयिन्यां महाराजाधिराजस्तारापीडो नाम। तस्य महिषी विलासवती, सर्वगुणाकरो मन्त्री शुकनासस्तस्य च पत्नी मनोरमा नामाभूत्। चिरमनपत्यताविषण्णायां विलासवत्यां विविधं व्रतमाचरन्त्यां कदाचित् राजा तन्मुखे प्रविशन्तं चन्द्रं स्वप्ने ददर्श। शुकनासोऽपि स्वप्ने केनचिद्विप्रेण निहितं मनोरमायाः क्रोडे पुण्डरीकमेकमद्राक्षीत्। अथ विलासवती चन्द्रापीडं नाम पुत्रं सुषाव, मनोरमापि वैशम्पायनं नाम। तौ च कुमारौ परस्परपरमसौहार्दसम्पन्नौ राज्ञो यत्नेन सकलविद्यापारमुपगतौ। ततस्तु चन्द्रापीडो राजादेशाद्बलाहकनाम्ना सेनापतिना समुपनीतमिन्द्रायुधनामानमश्ववरमधिरुह्य विद्यालयात् राजधानीमाजगाम। जनकजनन्यादिसन्दर्शनानन्दितो मृगयां विधायागतः पत्रलेखाप्राप्तिमुदितः शुकनासेन विविधमुपदिष्टो राज्ञा च यौवराज्येऽभिषिक्तो दिग्विजयाय प्रतस्थे। वत्सरत्रयेण सर्वा दिशो विदिशश्च विजित्य हेमकूटधाम्नां किरातानामावासभूमिं विश्रामहेतोरधितिष्ठन् कदाचिदेकाकी चन्द्रापीड इन्द्रायुधमारुह्य मृगयानिर्गतः किन्नरमिथुनमालोक्य तद्ग्रहणायानुधावन् पञ्चदश योजनानि ययौ। तस्मिंश्च किन्नरमिथुने सन्निहितमुत्तुङ्गशैलशृङ्गमारूढे नितान्तनिर्वेदमापन्नः परिश्रान्तः पिपासातुरश्च जलमन्विष्यन् विशालमनोहरमच्छोदं नाम सरो दृष्टवान्। कृतावगाहनपानश्च तत्तीरे विश्राम्यन् वीणानिनादसमेतं मधुरं गानमाकर्ण्य तदनुसृत्य [illegible] परमसुन्दरीं योगिनीं शिवान्तिकगतामालोकयत्। ततश्च लब्धातिथिसत्कारेण तेन स्पृष्टा सा समभाषत—

"अरिष्टातनयो गन्धर्वराजो हंसो मे जनकः, सोममयूखसम्भवकुलजाता गौरीदेवी च जननी, नाम च मे महाश्वेतेति। एकदा तु समतीतशैशवा खल्वहमस्मिन्नेव सरसि स्नातुमागता कुतोऽप्यलौकिकं सौरभमाघ्राय तदभिलक्ष्य गच्छन्ती केनचिदन्येन कुमारेण सहितं द्वितीयमिव मन्मथं मुनिकुमारमेकमालोक्य 'कोऽयं युवा, किमभिधाना चेयं कुसुममञ्जरी' इति द्वितीयं कुमारमपृच्छम्। स पुनरवादीत्—"दिव्यस्य महर्षेः श्वेतकेतोर्निरुपमरूपमोहितायाः श्रियो देव्या जातोऽयं तस्यैव महर्षेः पालितपुत्रः, पुण्डरीकजाततया पुण्डरीक

इत्यस्य नाम। इयन्तु पारिजातकुसुममञ्जरी नन्दनवन-देवतया सादरमुपहृता।/ सोऽपि कुमारः—"चपले! किमनेन प्रश्नपरिश्रमेण, यदि रोचते गृह्यतामियं" इत्युक्त्वा तां मञ्जरीं मम कर्णे निवेशयन् पतितामपि हस्ताद्‌क्षमालिकां नाज्ञासीत्। अहन्तु तां मालामादाय प्रस्थिता। अत्रान्तरे द्वितीयेन तु कुमारेण तं खलु मन्मथविकारमवलोक्य तिरस्क्रियमाणः स कुमारः समुपेत्य मालां ययाचे। अहन्तु स्वकीयमेव स्थूलमुक्तामयं हारं स्वकण्ठादुन्मुच्य तस्मै दत्त्वा तां पुनः स्फटिकजपमालां कण्ठे निधाय कृतस्नाना जनन्या सह स्वगृहमागच्छम्

अथ मुहूर्त्तानन्तरं परिचारिका मे तरलिका नाम समागत्य तेन कुमारेण कृतं मत्परिचयादिप्रश्नप्रपञ्चमज्ञापयत्, अददाच्च पत्रिकं, तत्र चेयमार्य्या लिखितासीत्—

'दूरं मुक्तालतया बिसंसितया विप्रलोभ्यमानो मे। हंस इव दर्शिताशो मानसजन्मा त्वयानीतः।'

दिवावसाने तु कपिञ्जलः समागत्य समुत्कण्ठितहृदयां मां तस्य कुमारस्य मन्मथव्यथामावेदयन् मम मातरमागच्छन्तीमवेत्य त्वरितं प्रातिष्ठत। जनन्यान्तु समागत्य प्रस्थितायां, अतीतायाञ्च सन्ध्यायां, उदिते चन्द्रमसि, निभृतमहं तरलिकाद्वितीया तमभिसरन्ती कपिञ्जलविलापमाकर्णयन्ती द्रुतमुपेत्य मन्दभाग्या तं खलु कुमारमुपरतमद्राक्षम्। अत्रान्तरे चन्द्रमण्डलादवतीर्य्य कश्चन महापुरुषः—"वत्से! महाश्वेते! न त्वया जीवनं परिहार्य्यम्, पुनरप्यनेन सह ते भविष्यति समागमः" इत्यभिधाय तं मृतमुत्क्षिप्य गगनमुदतिष्ठत्। रोषपरवशः कपिञ्जलोऽपि बद्धपरिकरस्तमन्वधावत्। अहन्तु विस्मिता च विषण्णा च संसारस्य क्षणभङ्गुरतामालोकयन्ती व्रतमिदमवलम्बितवती" इति।

अथ "सा तरलिका क्व गता" इति चन्द्रापीडेन पृष्टा सा पुनरवादीत् "मदिरादेव्यां जाता गन्धर्वराजस्य चित्ररथस्य कन्या कादम्बरी नाम द्वितीयमिव मे हृदयम्। सा च महार्त्तया "सशोकायां महाश्वेतायां नाहमात्मनः पाणिं ग्राहयिष्यामि" इति प्रतिजज्ञे। गन्धर्वराजानुरोधेन तु कादम्बर्याः पाणिग्रहणे सम्मतिसाधनाय तरलिकामहमद्यैव प्रेषितवतीति।

अथ परेद्युः प्रभात एव तरलिकया सह केयूरको नाम कश्चित् कादम्बरीभृत्यः समागत्य तस्याः पाणिग्रहणासम्मतिं न्यवेदयत्। ततो भृशमनुरुन्धत्या महाश्वेतया सह चन्द्रापीडो गन्धर्वराजधानीमुपेत्य असामान्यरूपलावण्यवतीं कादम्बरीं पश्यन्नमुह्यत। कादम्बर्य्यपि तथैव परिमुह्यन्ती यथावसरं दुकूलयुगलं शेषनामानमेकममूल्यं हारञ्च चन्द्रापीडायोपजहार। स तु कादम्बर्य्या भावविमोहितस्तदीयहृदयेन सह अच्छोदसरस्तीरमागत्य स्वकीयमेवागतं स्कन्धावारमालोक्य प्रविश्य च वैशम्पायनाय सर्वं न्यवेदयत्। अथ परेद्युः प्रभाते केयूरकेण समुपेत्य कादम्बरीदशां वर्णयता सहैव चन्द्रापीडः पत्रलेखामादाय गत्वा हिमगृहगतां कामाकुलां कादम्बरीं पश्यन् व्यङ्ग्यार्थपूर्णं ललितमालापं विधाय, तदनुरोधेन पत्रलेखां तत्रैवावस्थाप्य स्कन्धावारमागतः प्राप्य च पितुः पत्रं, पत्रलेखामादाय गन्तुं सेनापतिपुत्रं मेघनादनामानं स्थापयित्वा उज्जयिनीमयासीत्। कतिपयदिनानन्तरन्तु मेघनादेन सह पत्रलेखा गत्वा चन्द्रापीडाय कादम्बर्य्या अवस्थामुक्तिं विज्ञप्तिञ्च न्यवेदयदिति। (पूर्वभागः)।

---

सेयं कादम्बरीकथा बाणभट्टेन कथासरित्सागरीनपष्ठितमतरङ्गगतं मकरन्दिकोपाख्यानमेवं क्वचित् किञ्चिद्विकलीकृत्य पात्राणां नामान्तराणि च विधाय विरचिता। भूषणभट्टेन तूत्तरार्द्धे वृत्तान्तवैषम्यमपि किञ्चित् प्रतिपादितमिति प्रतीयते। तथा च

| कथासरित्सागरगतनामानि। | | | | कादम्बरीगतनामानि |
|---|---|---|---|---|
| काञ्चनपुरी | ... | ... | ... | विदिशा। |
| सुमना: | ... | ... | ... | शूद्रक:। |
| मुक्तालता | ... | ... | ... | चाण्डालदारिका। |
| शास्त्रगञ्ज: ( शुक: ) | ... | ... | ... | वैशम्पायन:। |
| हिमालयपादे रोहिणतरु: | | ... | ... | विन्ध्याटव्यां शाल्मलीतरु:। |
| मरीचि: | ... | ... | ... | हारीत:। |
| पौलस्त्य: | ... | ... | ... | जाबालि:। |
| रत्नाकरं पुरं | ... | ... | ... | उज्जयिनी नगरी। |
| ज्योतिष्प्रभ: | ... | ... | ... | तारापीड:। |
| हर्षवती | ... | ... | ... | विलासवती। |
| सोमप्रभ: | ... | ... | ... | चन्द्रापीड:। |
| प्रभाकर: | ... | ... | ... | शुकनास:। |
| प्रियङ्कर: | ... | ... | ... | वैशम्पायन:। |
| आशुश्रवा: ( उच्चैःश्रवस: पुत्र: ) | | ... | ... | इन्द्रायुध:। |
| पद्मकूट: | ... | ... | ... | हंस:। |
| हेमप्रभा | ... | ... | ... | गौरी। |
| मनोरथप्रभा | ... | ... | ... | महाश्वेता। |
| दीधितिमान् | ... | ... | ... | श्वेतकेतु:। |
| रश्मिवान् | ... | ... | ... | पुण्डरीक:। |
| सिंहविक्रम: ( विद्याधरराज: ) | | ... | ... | चित्ररथ: ( गन्धर्वराज: ) |
| मकरन्दिका | ... | ... | ... | कादम्बरी। |
| देवजय: | ... | ... | ... | केयूरक:। |
| सिंहविक्रम: शुकोऽभूत् | ... | ... | ... | पुण्डरीकी मध्ये वैशम्पायन: परञ्च तदाख्य एव शुकोऽभूत्। |
| रश्मिवान् सुमना अभूत् | ... | ... | ... | चन्द्रापीड: शूद्रकोऽभूत्। |

# अथ स्वरूप-नायकादिनिरूपणम् ।

**कादम्बरी नामेदं कथाकाव्यम् ।** यथा साहित्यदर्पणे—

"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ।
क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ॥
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ॥"

**अत्र मुक्तकादीनि चतुर्विधान्येव गद्यानि सन्ति, किन्तु उत्कलिकाप्रायमेव गद्यं बहुलम् ।** तथा च तत्रैव—

"वृत्तबन्धोज्झितं गद्यं, मुक्तकं वृत्तगन्धि च । भवेदुत्कलिकाप्रायं चूर्णकञ्च चतुर्विधम् ॥
आद्यं समासरहितं वृत्तभागयुतं परम् । अन्यद्दीर्घसमासाढ्यं तुर्यञ्चाल्पसमासकम् ॥"

**अनुकूलो धीरोदात्तलक्षणश्चन्द्रापीडो नायकः ।** यथा—

"अनुकूल एकनिरतः ।"
"अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ।"

**कादम्बरी तु कन्या परकीया मुग्धा नायिका ।** यथा—

"कन्या त्वजातोपयमा सलज्जा नवयौवना ।"
"परकीया द्विधा प्रोक्ता परोढा कन्यका तथा ।"
प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥'
परिणयात् पूरन्तु ( उत्तरार्द्धे ) स्वकीया मध्या च मन्तव्या ।

**विप्रलम्भशृङ्गारः प्रधानरसस्तत्र च पूर्वार्द्धे उत्तरार्द्धस्य कियदंशे च पूर्वरागरूपः, उत्तरार्द्धशेषे तु करुणरूपः । सम्भोगशृङ्गारोऽपि क्वचिद्दृश्यते ।**

"यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ।"
"श्रवणाद्दर्शनाद्वापि मिथःसंरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥"
"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः ॥"

करुणहास्यादयोऽन्येऽपि रसाः सन्ति ।

**बाहुल्येन माधुर्यं गुणः ।** यथा—

"चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते । सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ।"

प्रसादगुणोऽपि न विरलः ।

अतिरेकेण पाञ्चाली रीतिः। तथा च—

"वर्णैः शेषैः पुनर्द्वयोः। समस्तपञ्चषपदो बन्धः पाञ्चालिका मता॥"

अन्या अपि रीतयोऽल्पाधिक्यभावेन परिलक्ष्यन्ते।

---

तदर्थं संग्रहश्लोकः—

चन्द्रापीडोऽनुकूलः सकलगुणधरो नायकोऽस्मिन्नुदात्तः
नेत्री कन्यान्यदीया मृदुललिततनुर्मुग्धकादम्बरी च।
पाञ्चाली नाम रीतिर्विलसति बहुला विप्रलम्भो रसोऽङ्गी
माधुर्य्याख्यो गुणो वा कविमुकुटमणेः काव्ययोरन्त्यमेतत्॥

---






# कादम्बरी

## पूर्वभागे ।

### मङ्गलाचरणं ।

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे ।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥ १ ॥

---

नमो गणेशाय ।

शिरसि सशशिगङ्गा चित्रभानुश्च भालु:
वपुषि दधदनन्तः सागरान्तामनन्ताम् ।
उरसि च जगदम्बालम्बते सन्ततं यं
मनसि चिरमुदीयाद्धः शिवः श्रीशिवः सः ॥ १ ॥

ज्योतिरिङ्गणरुचा परिमोहात् यामिनीविकसनं प्रचिकीर्षुः ।
भेलयाऽस्मि जलधिञ्च तितीर्षुः देवदेव ! भव मेऽद्य सहायः ॥ २ ॥

कादम्बरीरससन्निपाननितान्तमत्तो जानाति कोऽपि न जनो गुणदोषवार्त्ताम् ।
तस्मात्सुदीयविवृतावपि दोषशङ्की श्रीमानिह प्रयतते हरिदासशर्म्मा ॥ ३ ॥

मूलानुवृत्ता सरला सुगाढ़ा सपल्लवा कल्पलताऽभिधाना ।
सुहृन्मनोनन्दनसम्भवेयं टीका प्रदेयान्निखिलार्थितार्थम् ॥ ४ ॥

अथ तत्रभवान् महाकविर्बाणभट्टः प्रारिप्सितपरिसमाप्तये "मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्च" इति सांख्यसूत्रादिबोधितकर्त्तव्यताकतया जगत्कारणस्य सगुणब्रह्मणो नमस्कारं कुरुते—

रजोजुष इति । प्रजायन्त इति व्युत्पत्त्या प्रजापदमत्र जन्यपदार्थमात्रोपलक्षणं । तथा च प्रजानां जगतां जन्मनि उत्पत्तिकाले रजोजुषे रजोगुणावलम्बिने चतुराननमूर्त्तये, स्थितौ प्रजानां परिपालनसमये

---

যিনি জগতের উৎপত্তির বেলায় রজোগুণাবলম্বী ব্রহ্মা, পরিপালনের সময় সত্ত্বগুণাধিষ্ঠিত বিষ্ণু, আবার প্রলয়কালে তমোগুণশালী রুদ্র, সৃষ্টি, স্থিতি ও প্রলয়ের কারণ বেদময় মায়াশালী সেই পরব্রহ্মকে নমস্কার করি ॥ ১ ॥

जयन्ति बाणासुरमौलिलालिता दशास्यचूड़ामणिचक्रचुम्बिनः ।
सुरासुराधीशशिखान्तशायिनो भवच्छिदस्त्र्यम्बकपादपांशवः ॥ २ ॥

---

सत्त्ववृत्तये सत्त्वगुणाधिष्ठिताय विष्णुस्वरूपाय, तथा प्रलये प्रजानां विनाशकाले तमःस्पृशे तमोगुणभाजि रुद्ररूपाय, सर्गस्थितिनाशहेतवे जगतां सृष्टिरक्षासंहारकारणीभूताय, त्रयीमयाय ऋग्यजुःसामरूपाय, त्रिगुणात्मने त्रिगुणं माया आत्मनि यस्य तस्मै मायाशालिने, अजाय नित्याय परब्रह्मणे नम इति वाचनिकनमस्कारः ।

अत्र रजोजुषे सर्गहेतवे, सत्त्ववृत्तये स्थितिहेतवे, तमःस्पृशे नाशहेतवे इति यथासंख्येनान्वयसम्भवाद् यथासंख्यमलङ्कारः ।

पद्येऽत्रैषु वंशस्थविलं वृत्तं "वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात् ।

रजोगुणादीनां लक्षणमुक्तं सांख्यकारिकायां

"सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः ।

गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥"

ब्रह्मणः सर्गादिहेतुत्वे प्रमाणन्तु "जन्माद्यस्य यत" इति वेदान्तसूत्रं, "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति श्रुतिः, "ब्रह्मत्वे सृजते लोकान् विष्णुत्वे पालयत्यपि । रुद्रत्वे संहरत्येव तिस्रोऽवस्थाः स्वयम्भुवः ।" इति स्मृतिश्च ।

हेतुत्वञ्चास्य निमित्तत्वमुपादानत्वञ्चावगन्तव्यं । तथा च वेदान्तसूत्रं "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" । "प्रकृतिश्च उपादानकारणञ्च ब्रह्माभ्युपगन्तव्यं निमित्तकारणञ्च" इति शाङ्करभाष्यञ्च ।

"चत्वारि शृङ्गास्त्रयोऽस्य पादा" इत्यादिश्रुतेः "वेद एव परं ब्रह्म" इत्यादिस्मृतेश्च ब्रह्मणस्त्रयीमयत्वं, "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ।" इति श्रुतेः "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरं । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥" इति सांख्यप्रवचनभाष्यधृतस्मृतेश्च मायाधिष्ठानकाले ब्रह्मणस्त्रिगुणात्मकत्वमवगन्तव्यमिति संक्षेपः ॥१॥

"ज्ञानञ्च शङ्करादिच्छे"दिति स्मृतेश्चिकीर्षितकाव्यकरणोपयोगिज्ञानलाभाय चरणरेणूत्कर्षप्रतिपादनव्याजेन शङ्करं स्मरति जयन्तीति । बाणासुरस्य बाणनाम्नो महाशैवस्य असुरस्य मौलिना मुकुटेन लालिताः नमस्कारकाले आदरेण गृहीताः, दशास्यचूड़ामणीनां रावणकिरीटरत्नानां चक्रं समूहं चुम्बन्ति प्रणामकाले स्पृशन्ति ये ते । सुरासुराधीशानां देवासुरपतीनां शिखान्तेषु चूड़ायभागेषु शयितुं प्रणतिकाले स्थातुं शीलं येषां ते, तथा भवच्छिदः पुनर्जन्मनिवर्त्तकाः मोक्षोपयोगिज्ञानजननद्वारा संसारक्लेशनिवर्त्तका इत्यर्थः, त्र्यम्बकस्य त्रिलोचनस्य शिवस्य पादपांशवः चरणधूलयो जयन्ति सर्वोत्कर्षेण वर्त्तन्ते । "जेस्तुवन्नास्तिवन्ति" इति वचनात् लट् । उत्कर्षप्रतिपादनेन नमस्कार आक्षिप्यते ।

अत्र उत्कर्षप्रतिपादनकार्य्यं प्रति बाणासुरमौलिलालनादिकारणचतुष्टयोपन्यासात् समुच्चयोऽलङ्कारः, वृत्त्यनुप्रासश्चैतयोः संसृष्टिः ॥ २ ॥

---

অসুররাজ বাণকর্তৃক আদরে মস্তকে পরিগৃহীত, রাক্ষসরাজ রাবণের মুকুটমণিসংস্পর্শী, দেবাধিপতি ও অসুরাধিপতিগণের কেশকলাপবর্ত্তী এবং সংসারযন্ত্রণাবিনাশী মহাদেবের চরণধূলির জয় হউক ॥ ২ ॥

जयत्युपेन्द्रः सः चकार दूरतो बिभित्सया यः क्षण लब्ध (१) लक्ष्यया (२)।
दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम्॥ ३॥
नमामि भर्वो(३)श्चरणाम्बुजद्वयं सशेखरैर्मौखरिभिः कृतार्चनम्।
समस्तसामन्तकिरीटवेदिका-विटङ्कपीठोल्लुठितारुणाङ्गुलि॥ ४॥

---

इष्टदेवतास्मरणात् सम्पूर्णफललाभाभिलाषेण नरसिंहमूर्त्तिं विष्णुं स्मरति, जयतीति। स प्रसिद्धः अनुजत्वेन इन्द्रमुपगत इत्युपेन्द्रो नरसिंहमूर्त्तिर्विष्णुः जयति सर्वोत्कर्षेण वर्त्तताम्। यः बिभित्सया भेत्तुं विदारयितुं इच्छया दूरतः क्षणं लब्धं लक्ष्यं विषयः तदेवोरःस्थलं यया तया क्षणं तद्वक्षःस्थलं पश्यन्त्या इत्यर्थः. कोपारुणया क्रोधेन रक्तवर्णया दृशैव चक्षुषैव न तु नखद्वारा विदारयेनेत्यर्थः, रिपोः शत्रोः हिरण्यकशिपोः उरो वक्षःस्थलं भयात् स्वयं भिन्नमिव नरसिंहभयात् आत्मना विदीर्णमिव अस्रपाटलं स्वकीयरक्तनयनकिरणपातेन रुधिरवत् श्वेतरक्तं चकार। एतेन बाणभट्टो नरसिंहोपासक आसीदिति प्रतीयते।

अत्र भयात् स्वयं भिन्नमिवेति वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, हिरण्यकशिपुवक्षसः स्वकीयश्यामगुण-त्यागात् पाटलगुणग्रहणेन तद्गुणालङ्कारो लुप्तोपमा च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः। स इति तच्छब्दस्य प्रसिद्धपरामर्शित्वात् यच्छब्दस्य चोत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणात् "आत्मा जानाति, यत् पाप" मित्यादि दर्पणोदाहृतवत् न वाक्यगतविधेयाविमर्शदोषः॥ ३॥

"आदौ गुरुं नमस्कृत्य" इति स्मरणाद् गुरुं नमस्कुरुते नमामीति। शेखरैः शिरोमाल्यैः सह वर्त्तमाना इति सशेखरास्तैः, मुखरस्य वेदपाठेन शब्दायमानस्य भाव इति मौखरं तदेषामस्तीति मौखरिणः तैः वेदध्वनिकारिभिः शिष्यैः। केचित्तु सशेखरैः सकिरीटैः मौखरिभिः क्षत्रियविशेषैरिति व्याचक्षुः कृता अर्चना पूजा यस्य तत्। समस्तानां सामन्तानां अधिकृतानां राज्ञां, किरीटान्येव वेदिकाः परिष्कृतभूमयः तासु यानि विटङ्कपीठानि कपोतपालिकास्थलानि मध्यगतोन्नतदेशा इत्यर्थः, तेषु उल्लुठिताः प्रणामकाले संसक्ताः, अरुणाः किरीटमणिकिरणसम्पर्कात् स्वभावाच्च रक्तवर्णा अङ्गुलयो यस्य तत्। भर्वोः भर्वुनामकस्य गुरोश्चरणाम्बुजद्वयं नमामि। एतेनास्य नित्याध्यापकत्वं सार्वभौममन्त्रित्वञ्च सूचितम्।

अत्र परितः समानतासूचनाय किरीटेषु वेदिकात्वारोप इति यथाकथञ्चित् निरङ्गं केवलरूपकमलङ्कारः पूजोपयोगिपुष्पसंग्रहद्योतनार्थं सशेखरैरित्युक्तमिति नापुष्टार्थत्वदोषः। विटङ्कपदस्य अत्युन्नतत्वप्रतिपादन-योजनाय किरीटमध्यगतोन्नतदेशार्थे लक्षणया प्रयुक्तमिति न नेयार्थतादोषोऽपि। "कपोतपालिकायान्तु विटङ्कं पुं नपुंसक" मित्यमरः। ४।

---

জগৎপ্রসিদ্ধ নরসিংহমূর্ত্তি নারায়ণের জয় হউক; যিনি বিদারণ করিবার ইচ্ছায় দূর হইতে ক্ষণকাল অবলোকনকারী এবং ক্রোধে রক্তবর্ণ নিজনয়নদ্বারাই হিরণ্যকশিপুর বক্ষঃস্থলকে ভয়বশতঃ আপনা হইতে বিদীর্ণের ন্যায় রুধিরতুল্য পাটলবর্ণ করিয়াছিলেন॥ ৩॥

মস্তকে পুষ্পমাল্যধারী ও সর্ব্বদা বেদধ্বনিকারী শিষ্যগণ যাহার পূজা করে এবং সকল সামন্তরাজগণের কিরীটবেদিকার উন্নতস্থানসংস্পর্শে যাহার অঙ্গুলিসমূহ রক্তবর্ণ হইয়া থাকে, 'ভর্বু' নামক গুরুদেবের সেই চরণকমলযুগলকে নমস্কার করি॥ ৪॥

---

(१)..लब्ध...। (२) ..लक्षया। (३) भत्सोः, भर्त्सोः।

## सज्जनदुर्ज्जनयोः स्तुतिनिन्दे।

अकारणाविष्कृतवैरदारुणादसज्जनात् कस्य भयं न जायते।
विषं महाहेरिव यस्य दुर्व्वचः सुदुःसहं सन्निहितं सदा मुखे॥ ५॥
कटु क्वणन्तो मलदायकाः खला स्तुदन्त्यलं बन्धनशृङ्खला इव।
मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव॥ ६॥
सुभाषितं हारि विशत्यधो गलान्न दुर्ज्जनस्यार्करिपोरिवामृतम्।
तदेव धत्ते हृदयेन सज्जनो हरिर्महारत्नमिवातिनिर्म्मलम्॥ ७॥

---

अकारणेति। अकारणं आविष्कृतेन उद्भावितेन वैरेण निन्दादिभिः शत्रुतया दारुणात् भीषणप्रकृतेः असज्जनात् कस्य जनस्य भयं न जायते अपितु सर्व्वस्यैव जायत इत्यर्थः। महाहेर्म्महासर्पस्य विषमिव यस्य असज्जनस्य मुखे वदने सुदुःसहं अतीवकष्टेन सहनीयं दुर्व्वचः कटुवाक्यं सदा सन्निहितं आसन्नं उपस्थितं वर्त्तते। अतएव ममापि चिकीर्षितकाव्यनिन्दावादसम्भावनया असज्जनाद्भयमस्तीति भावः।

अत्र प्रथमार्द्धे अर्थापत्तिः द्वितीयार्द्धे चोपमा, अनयोः परस्परनैरपेक्ष्यात् संसृष्टिरलङ्कारः॥ ५॥

कटिति। कटु श्रुतिदुःखावहं यथा स्यात्तथा क्वणन्तः ध्वनन्तः शब्दायमानास्च मलदायका दोषाविष्कारिणः स्वसंलग्नस्थाने मलजनकाश्च खला दुर्ज्जनाः, बन्धनशृङ्खला इव अलं अत्यर्थं तुदन्ति मनो बन्धनस्थानञ्च व्यथयन्ति। तु किन्तु सन्तः सज्जनाः, मणिनूपुरा इव पदे पदे स्थाने स्थाने सर्व्वत्रैवेत्यर्थः प्रतिपदक्षेपे च साधुध्वनिभिः सन्तोषकरवाक्यैः श्रुतिमधुरशब्दैश्च मनो हरन्ति आकर्षन्ति। सुतरां मयापि प्रारिप्सितकाव्यस्य निन्दया दुर्ज्जनान्मनोवेदना, प्रशंसया च सज्जनान्मनःसन्तोषः सम्भाव्यत इति भावः।

अत्र पूर्णोपमयोर्मिथोनिरपेक्षतया संसृष्टिरलङ्कारः।

"शृङ्खला पुंस्कटीवस्त्रबन्धे च निगडे त्रिषु।" इति मेदिनी॥ ६॥

सुभाषितमिति। हारि मनोहरं सुभाषितं प्रशस्तवाक्यं मत्काव्यादि कर्त्तृ, अर्करिपोः राहोः अमृतं पीयूषमिव दुर्ज्जनस्य खलस्य गलात् कण्ठात् अधो न विशति प्रवेशं न लभते। यथा राहुर्गलादधःस्थानाभावात् कवलीकृतस्यापि चन्द्रस्यामृतं निगिरितुं नार्हति, तथा दुर्ज्जनोऽपि सहृदयत्वाभावात् मत्काव्यमास्वाद्यमानमपि

---

বিনা কারণে যে, শত্রুতা প্রকাশ করে এবং ভয়ঙ্কর সর্পের মুখে বিষের ন্যায় যাহার মুখে সর্ব্বদা নিতান্ত অসহ্য দুর্ব্বাক্য উপস্থিত থাকে এইরূপ ভীষণস্বভাব দুর্জ্জন হইতে কাহার ভয় না জন্মে॥ ৫॥

কটুভাষী এবং দোষোদ্ভাবনকারী দুর্জ্জনগণ, রূক্ষশব্দকারী ও মলজনক বন্ধনশৃঙ্খলের ন্যায় অত্যন্ত বেদনা জন্মায়। কিন্তু মণিময় নূপুর যেমন প্রতিপদক্ষেপে শ্রুতিমধুরশব্দে চিত্ত আকর্ষণ করে, তেমন সাধুগণ সর্ব্বত্রই মধুর বাক্যে চিত্ত আকর্ষণ করেন॥ ৬॥

চন্দ্রের অমৃত যেমন রাহুর গলার নীচে প্রবেশ করে না, সেইরূপ মনোহর বাক্য দুর্জ্জনের

Rahu drinking Amrit in [illegible]

## कथाप्रशंसा ।

स्फुरत्कलालापविलासकोमला करोति रागं हृदि कौतुकाधिकम् ।
रसेन शय्यां स्वयमभ्युपागता कथा जनस्याभिनवा वधूरिव ॥ ८ ॥

---

सत्काव्यादिकं नावबुध्यत इति सरलार्थः। किन्तु सज्जनो गुणग्राही जनः हरिर्विष्णुः अतिनिर्म्मलं महारत्नं कौस्तुभमणिमिव तदेव हारि सुभाषितं हृदयेन धत्ते धारयति। सुतरां ममाप्येतत् काव्यं दुर्ज्जनो नावबुध्यमानः परिहरेत् गुणग्राही तु साकल्येन बुध्यमानो नितरामाद्रियेतेति भावः।

अत्राप्युपमयोः पूर्ववत् संसृष्टिरलङ्कारः॥ ७॥

स्फुरदिति। स्फुरतः प्रकाशमानस्य स्पष्टं प्रतीयमानस्य कलालापस्य नृत्यगीतादिकलाविद्यासम्बन्धिनो वाक्यस्य विलासेन विन्यासेन कोमला मृदुला, युक्तवर्णनादिवदनुद्धतेत्यर्थः, पक्षान्तरे तु स्फुरन्तौ प्रकाशमानौ यौ कलालापविलासौ मधुरालापविभ्रमौ ताभ्यां कोमला मनोहरा। तथा रसेन शृङ्गारादिना स्वप्रतिपाद्यशृङ्गारादिर-सैक्येनेत्यर्थः शय्यां गुम्फं ग्रथनं अवान्तरकथानां स्वप्रासङ्गिकतया संयोगमिति यावत् स्वयं अभ्युपागता आत्मना प्राप्ता, अन्यत्र तु रसेन सुरतानुरागेण स्वयं आत्मनैव शय्यां शयनीयं अभ्युपागता उपस्थिता, अभिनवा अपूर्वा कथा तदाख्यः प्रबन्धः, अभिनवा वधूरिव तरुणी भार्य्येव जनस्य हृदि चित्ते कौतुकेन अधिकं बहुलीभूतं रागं श्रवणस्य सुरतस्य च अनुरागं करोति जनयति। सुतरामियमपीदृश्येव मत्प्रणीता कादम्बरीकथा लोकस्य श्रवणानुरागं जनयिष्यतीति भावः।

अत्र पूर्णोपमालङ्कारः। रसेन इत्युक्तावपि न रसस्य स्वशब्दोक्तिदोषः, स्वरूपेणानुभूयमानस्यैव रसस्य तत्तच्छब्देनाभिधाने तद्दोषाङ्गीकारात्, अत्र तु स्वरूपेणानुभूयमानत्वाभावात्, अन्यथा "शृङ्गारवीरकरुणाद्भुत-हास्यभयानकाः"* इत्यमरोक्त्यादावपि तद्दोषप्रसङ्गात्।

"कोमलं मृदुसुन्दरे" इति विश्वः। "शय्या तल्पे शब्दगुम्फे" इत्यनेकार्थः। अस्यानुरूपः श्लोको यथा—"दर्शयन्ती मुखे खेदं प्रस्खलन्ती पदे पदे। कथञ्चिन्नीयते शय्यां कथा नववधूरिव ॥" ८ ॥

---

কণ্ঠের নীচে প্রবেশ করে না। কিন্তু নারায়ণ, যেমন অতিনির্ম্মল কৌস্তভমণি হৃদয়ে ধারণ করেন, গুণগ্রাহী সজ্জন, সেইরূপ মনোহর বাক্য হৃদয়ে ধারণ করেন ॥ ৭ ॥

সুস্পষ্ট মধুরালাপে ও হাবভাবে নিতান্ত মনোহরা এবং অনুরাগবশতঃ আপনা হইতেই শয্যায় উপস্থিতা যুবতি-বধূর ন্যায়, সুগমকলাবিদ্যাসম্বন্ধীয় বাক্যবিন্যাসে সুশ্রাব্য এবং শৃঙ্গারাদি কোন একটী রসের অনুসরণ করায় অবান্তর কথার সহিত সুশ্লিষ্ট কথাকাব্য, লোকের হৃদয়ে কৌতুকবশতঃ সমধিক অনুরাগ জন্মাইয়া থাকে ॥ ৮ ॥

हरन्ति कं नोज्ज्वलदीपकोपमैर्नवैः पदार्थैरुपपादिताः कथाः ।
निरन्तरश्लेषघनाः सुजातयो महास्रजश्चम्पककुड्मलैरिव ॥ ९ ॥

## कविवंशवर्णनं ।

बभूव वात्स्यायनवंशसम्भवो द्विजो जगद्गीतगुणोऽग्रणीः सताम् ।
अनेकगुप्तार्च्चितपादपङ्कजः कुबेरनामांश इव स्वयम्भुवः ॥ १० ॥

---

हरन्तीति । उज्ज्वलाः स्पष्टाः दीपकोपमा दीपकालङ्कारोपमालङ्कारा येषु तैः, नवैरपूर्वैः पदार्थैः शब्दानामभिधेयैः, उपपादिता विरचिताः, निरन्तरेण अविरलेन प्रायेण सर्व्वत्रैव स्थितेन श्लेषेण श्लेषालङ्कारेण घनाः सुगाढा दुरवगाहाः, सुजातयः सुन्दरजातीयाः, कथाः तदाख्याः प्रबन्धाः, उज्ज्वला दीपकाः प्रदीपाः, उपमा उपमानानि येषां तैः, उज्ज्वलप्रदीपतुल्यैरित्यर्थः नवैर्नूतनैः पदार्थैः उपादेयपदार्थभूतैः, चम्पककुड्मलैः चम्पकमुकुलैः, उपपादिता ग्रथिताः, निरन्तरश्लेषेण अव्यवधानसंयोगेन घना निविडाः, तथा शोभना जातयो जातिकुसुमानि यासु ताः, महास्रजो महामाला इव कं जनं न हरन्ति, नाकर्षन्ति अपि तु सर्वमेवेत्यर्थः । सुतरां ममाप्येषा कथा सर्व्वमेव जनमाकर्षेदिति भावः ।

अत्रार्थापत्तिपूर्णोपमयोरङ्गाङ्गिभावेन सङ्करोऽलङ्कारः । विकासोन्मुखतया विशेषसौन्दर्य्यप्रतिपादनाय कुड्मलग्रहणं ॥ ९ ॥

बभूवेति । वत्सस्यापत्यमिति वात्स्यः सः अयनं गोत्रप्रवर्त्तकतया आश्रयो यस्य स तादृशो यो वंशस्तत्र सम्भव उत्पन्नः । जगता जगज्जनेन गीताः कीर्त्तिताः गुणाः विद्याविनयादयो यस्य सः । सतां साधूनां अग्रणीः अग्रसरः श्रेष्ठः । अनेकैर्बहुभिः गुप्तैर्वैश्यैः अर्च्चिते पूजिते पादपङ्कजे चरणकमलद्वयं यस्य सः । तथा स्वयम्भुवो ब्रह्मणः अंशः अंशावतार इव कुबेरनामा द्विजो ब्राह्मणो बभूव ।

अत्र स्वयम्भुवोंऽश इवेति वाच्या भावाभिमानिनी द्रव्योत्प्रेक्षालङ्कारः । "शर्म्मा देवश्च विप्रस्य वर्म्मान्तं क्षत्रियस्य च । गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ।" इति वचनात् गुप्तपदेन वैश्यग्रहणं ॥ १० ॥

---

সহজ বোধ্য দীপক ও উপমালঙ্কারসম্পন্ন, অপূর্ব্ব পদার্থের সমাবেশে বিরচিত এবং অবিরত শ্লেষালঙ্কারে কিঞ্চিৎ দুর্বোধ্য সুন্দর কথাকাব্য, উজ্জ্বল প্রদীপের তুল্য, নূতন উপাদেয় বস্তু চম্পককুসুমকলিকাদ্বারা গ্রথিত, জাতীকুসুমসম্পন্ন এবং পরস্পর ঘনসন্নিবিষ্ট মহামালার ন্যায় কোন ব্যক্তিকে আকর্ষণ না করে ॥ ৯ ॥

ব্রহ্মার অংশাবতারের ন্যায় বাৎস্যগোত্রে কুবেরনামে এক ব্রাহ্মণ জন্মগ্রহণ করিয়াছিলেন ; তিনি সাধুগণের অগ্রগণ্য ছিলেন, জগতের লোক তাঁহার গুণগান করিত এবং অনেক বৈশ্য তাঁহার চরণকমলের সেবা করিত ॥ ১০ ॥

उवास यस्य श्रुतिशान्तकल्मषे सदा पुरोडाशपवित्रिताधरे ।
सरस्वती सोमकषायितोदरे समस्तशास्त्रस्मृतिबन्धुरे मुखे ॥ ११ ॥

जगुर्गृहेऽ (१) भ्यस्तसमस्तवाङ्मयैः ससारिकैः पञ्जरवर्त्तिभिः शुकैः ।
निगृह्यमाणा बटवः पदे पदे यजूंषि सामानि च यस्य शङ्किताः ॥ १२ ॥

---

उवासेति । श्रुतिभिर्वेदैः वेदपाठैरित्यर्थः शान्तं विनष्टं कल्मषं पापं यस्य तस्मिन् नित्यवेदपाठेन वाचनिकपापहीन इत्यर्थः । पुरोडाशेन अग्निहोत्रादौ हुतशेषेण हविषा पवित्रितौ भक्षणकाले संयोगेन पवित्रीकृतौ अधरौ ओष्ठौ यस्य तस्मिन् । सोमेन सोमरसेन यज्ञे सोमरसपानेन कषायितं सुरभीकृतं उदरं अभ्यन्तरं यस्य तस्मिन् । तथा समस्ता याः शास्त्रस्मृतयः व्यासादिप्रणीतब्रह्मसूत्रादीनि शास्त्राणि मन्वादिप्रणीतधर्म-संहिताश्च स्मृतयः, ताभि स्तत्पाठैरित्यर्थः बन्धुरं रम्यं तस्मिन् । यस्य कुबेरस्य मुखे वदने सरस्वती वाग्देवी सदा उवास वसति स्म । एतेनास्य नित्यवेदपाठित्वं नियतयाज्ञिकत्वं सर्वशास्त्रज्ञत्वञ्च प्रत्यायितम् ।

"पुरोडाशो हविर्भेदे ..हुतशेषे च कीर्त्तित" इति विश्वः । "बन्धुरं मुकुटे…त्रिषु स्यान्नम्रसुन्दरयोः" इति मेदिनी ।

पुरोडाशेति "मन्ते श्वेतवहुक्थशंसपुरोडाशावयजिभ्यो विन्" इति निपातः । पवित्रौ कृताविति पवित्रितौ, कषायं कृतमिति कषायितं उभयत्रापि करोत्यर्थेन ण्यन्तात् कर्मणि क्तः । स्मृतीनां शास्त्रान्तर्गतत्वेऽपि तासां धर्मप्रतिपादकतया प्राधान्यसूचनार्थं पृथक् स्मृतिपदमुपात्तं गोवृषन्यायात् ॥ ११ ॥

जगुरिति । यस्य कुबेरस्य गृहे बटवो ब्राह्मणबालकाः, अभ्यस्तं अनेकशः श्रवणात् स्वस्थीकृतं समस्तं सकलं वाङ्मयं शास्त्रं यै स्तैः, पञ्जरवर्त्तिभिः, सारिकाभिः सहेति ससारिकैः शुकैः कीरपक्षिभिः पदे पदे प्रतिपदोच्चारणे निगृह्यमाणाः 'युष्माभिरशुद्धं पठितं, इदन्तु एतादृक्' इत्थं पराभूयमानाः, अतएव शङ्किताः पुनरपि शुककर्त्तृकदोषोद्भावनशङ्कान्विताः सन्तः, यजूंषि यजुर्वेदान् सामानि सामवेदांश्च जगुः पठितवन्तः । एतेन तस्य चिरतरप्रचुरशिष्याध्यापकत्वं सूचितम् ।

अत्र ससारिकैः शुकैस्तथा शिक्षासम्बन्धेऽपि तत् सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥ १२ ॥

---

বাগ্দেবী সর্ব্বদা যাহার মুখে বাস করিতেন, এবং বেদপাঠে যাহার মুখের বাচনিক পাপ বিনষ্ট হইয়াছিল, যজ্ঞের অবশিষ্ট দ্রব্যভক্ষণে ওষ্ঠযুগল পবিত্র করিয়াছিল, যজ্ঞকালে সোমরস পান করায় মুখমধ্য সৌরভ সম্পন্ন হইত, আর যাহার মুখখানি সকলশাস্ত্র উচ্চারণ করিবার কালে সুন্দর দেখাইত ॥ ১১ ॥

অনবরত শ্রবণ করায় সকল শাস্ত্র যাহাদের মুখস্থ হইয়াছিল, এই জাতীয় পঞ্জরস্থিত শুক ও সারিকাগণকর্ত্তৃক পদে পদে পরাস্ত হইয়া ব্রাহ্মণবালকগণ. আশঙ্কিত চিত্তে যাহার গৃহে যজুর্ব্বেদ ও সামবেদ পাঠ করিত ॥ ১২ ॥

---

(१) यत्र… ।

हिरण्यगर्भो भुवनाण्डकादिव क्षपाकरः क्षीरमहार्णवादिव ।
अभूत् सुपर्णो विनतोदरादिव द्विजन्मनामर्थपतिः पतिस्ततः ॥ १३ ॥
विद्वण्वतो यस्य विसारि वाङ्मयं दिने दिने शिष्यगणा नवा नवाः ।
उषस्सु लग्नाः श्रवणेऽधिकां श्रियं प्रचक्रिरे चन्दनपल्लवा इव ॥ १४ ॥
विधानसम्पादितदानशोभितैः स्फुरन्महावीरसनाथमूर्त्तिभिः ।
मखैरसंख्यैरजयत् सुरालयं सुखेन यो यूपकरैर्गजैरिव ॥ १५ ॥

---

हिरण्येति। भुवनाण्डकात् ब्रह्माण्डात् द्विजन्मनां पतिः ब्राह्मणानामधिपतिः हिरण्यगर्भो ब्रह्मा इव, क्षीरमहार्णवात् द्विजन्मनां पति र्द्विजराजः क्षपाकरश्चन्द्र इव, विनतायास्तदाख्यायाः कश्यपभार्य्याया उदरात् द्विजन्मनां पतिः पक्षिश्रेष्ठः सुपर्णो गरुड़ इव, ततः कुवेरात् द्विजन्मनां पतिः ब्राह्मणश्रेष्ठः अर्थपतिः अर्थपतिनामा कश्चिदभूत्। ब्रह्मतुलनया वेदपारदर्शित्वं चन्द्रसाम्येन सर्व्वाह्लादकत्वं गरुड़साद्दश्येन च नारायणपरायणत्वं सूचितम्।

अत्र मालोपमाऽलङ्कारः। ब्रह्माण्डतो ब्रह्मण उत्पत्तौ प्रमाणं यथा मनुः "तदण्डमभवद्धैमं सहस्रांशु-समप्रभं। तस्मिन् यज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः।" १३ ॥

विद्वण्वत इति। दिने दिने प्रत्यहं उषस्सु प्रभातकालेषु नवा नवा नूतना नूतनाः शिष्यगणाः चन्दनपल्लवाः चन्दनतरुकिसलयानि इव श्रवणे शास्त्रार्थाकर्णने रमणीनां कर्णे च लग्ना आसक्ताः सन्तः, विसारि विशालं वाङ्मयं शास्त्रं विद्वण्वतः विवरणेनार्थं प्रकाशयतः अध्यापयत इत्यर्थः यस्य अर्थपतेः अधिकां श्रियं शोभां प्रचक्रिरे। अत्रोपमालङ्कारः ॥ १४ ॥

विधानेति। यः अर्थपतिः, विधानेन वेदविध्यनुसारेण सम्पादितं कृतं यद्दानं धनवितरणं तेन शोभितैः, अन्यत्र तु विधानेन भक्ष्यकवलेन सम्पादितं जनितं यद्दानं मदजलं तेन शोभितैः। स्फुरन्तः प्रज्वलन्तो ये महावीरा होमाग्नयः तैः सनाथाः सहिताः मूर्त्तयः स्वरूपाणि येषां तैः, अन्यत्र तु स्फुरन्तः समरोत्साहेन स्पन्दमानाः ये महावीरा महायोद्धारः तैः सनाथा आरोहणेन संयुक्ता मूर्त्तयः शरीराणि येषां तैः।

---

ভুবনকোষ হইতে ব্রহ্মার ন্যায়, ক্ষীরোদসমুদ্র হইতে চন্দ্রের ন্যায় এবং বিনতার উদর হইতে গরুড়ের ন্যায় সেই কুবের হইতে ব্রাহ্মণশ্রেষ্ঠ অর্থপতি জন্মগ্রহণ করিয়াছিলেন ॥ ১৩ ॥

কর্ণস্থিত চন্দনপল্লব রমণীগণের যেমন শোভাসম্পাদন করে, তেমন প্রতিদিন প্রভাতকালে নূতন নূতন ছাত্রগণ, শাস্ত্রার্থ শ্রবণে আসক্ত হইয়া বিস্তৃত শাস্ত্রসমূহের অধ্যাপনায় ব্যাপৃত যে অর্থপতির বিশেষ শোভাসম্পাদন করিত ॥ ১৪ ॥

যথাবিধি ধনবিতরণে পরিশোভিত, প্রজ্বলিতহোমাগ্নিসম্পন্ন এবং যূপ বিশিষ্ট (খাদ্য দান করায় মদজল নিঃসৃত হইয়া যাহাদের শোভা জন্মায়, সমরোৎসাহে স্ফূর্ত্তিমান্ মহাবীরগণ যাহাদের উপরে আরোহণ করেন এবং যূপকাঠের ন্যায় যাহাদের শুঁড়, সেইরূপ) হস্তিতুল্য অসংখ্য যজ্ঞদ্বারা যিনি অনায়াসে স্বর্গলোক আয়ত্ত করিয়াছিলেন ॥ ১৫ ॥

स चित्रभानुं तनयं महात्मनां सुतोत्तमानां श्रुतशास्त्रशालिनाम्।
अवाप मध्ये स्फटिकोपलामलं क्रमेण कैलासमिव क्षमाभृताम्॥ १६॥
महात्मनो यस्य सुदूरनिर्गताः कलङ्कमुक्तेन्दुकलामलत्विषः।
द्विषन्मनः प्राविविशुः कृतान्तरा गुणा नृसिंहस्य नखाङ्कुरा इव॥ १७॥

---

यूपान् पशुबन्धनस्तम्भान् कुर्वन्ति प्रयोजनवशात् सम्पादयन्तीति यूपकरास्तैः, अन्यत्र तु यूपा इव कराः शुण्डा येषां तैः। गजैर्हस्तिभिरिव असंख्यैः मखैर्यज्ञैः सुखेन अनायासेन सुरालयं स्वर्गं अजयत् आयत्तीकृतवान्। स्वर्गकामतया कृतैः बहुभिर्यज्ञैरश्वमेधेन स्वर्गलाभमवश्यम्भाविनमकरोदिति सरलार्थः।

अत्र पूर्णोपमानुप्राणिता समासोक्तिः कार्य्येण गजसैन्यैः परनगरविजयिनः कस्यचिन्नरपतेर्व्यवहार-समारोपात्।

"विधानं हस्तिकवलः" इति वैजयन्ती। "होमाग्निस्तु महाज्वालो महावीरः प्रवर्गवत्।" इति आव-चन्द्राद्धिधृतः कोषः॥ १५॥

स इति। सः अर्थपतिः, क्रमेण पुत्राणामुत्पत्तिक्रमेण, क्षमाभृतां गिरीणां मध्ये स्फटिकोपलैः स्फटिक-मणिभिः अमलं निर्मलं धवलं कैलासमिव क्षमाभृतां क्षमागुणान्वितानां महात्मनां महाबुद्धीनां श्रुतिशास्त्रशालिनां वेदशास्त्रज्ञानां सुतोत्तमानां उत्कृष्टपुत्राणां मध्ये चित्रभानुं नाम तनयं पुत्रं अवाप लेभे।

अत्रोपमाऽलङ्कारः।

अर्थपतेर्भृगुप्रभृतय एकादश पुत्रास्तन्मध्ये चित्रभानुरष्टमः। तथा च हर्षचरिते "सोऽजनयद्भृगुं हंसं शुचिं कविं महीदत्तं धर्मं जातवेदसं चित्रभानुं त्र्यक्षं अहिदत्तं विश्वरूपञ्चेत्येकादश रुद्रानिव सोमामृतरस-शीकरच्छुरितमुखान् पवित्रान् पुत्रान्।"॥ १६॥

महेति। सुदूरनिर्गता बहुदूरदेशव्यापिनः, अन्यत्र तु आधिक्येनाङ्गुल्यग्राद्बहिर्भूताः। कलङ्केन हरिणलाञ्छनेन मुक्ता रहिता या इन्दुकला चन्द्रलेखा तद्वत् अमला त्विट् द्युतिर्येषां ते। इदमुभयत्रापि समानं। तथा कृतं स्वमाहात्म्याविष्कृतं अन्तरं प्रवेशावकाशो यैस्ते, अन्यत्र तु कृतं अन्तरं भेदो विदारणं यैस्ते। यस्य महात्मनः चित्रभानोर्गुणा दयादाक्षिण्यविद्यादयः, नृसिंहस्य नरसिंहमूर्त्तिधारिणो नारायणस्य नखाङ्कुरा अङ्गुल्यग्रवर्त्तिनो नखरा इव द्विषतां शत्रूणां मनोऽपि अन्यत्र तु द्विषतः शत्रोर्हिरण्य-कशिपोः, मनो हृदयं वक्षश्च प्राविविशुः प्रविशन्ति स्म। यस्य गुणाः शत्रूणामपि हृदयग्राहिण आसन् तन्माहात्म्ये किंनाम वक्तव्यमिति भावः।

अत्र पूर्णोपमालङ्कारः। तथा द्विषन्मन इत्यत्र अपिशब्दो वक्तव्यः किन्तु नोक्त इति वाच्यानभिधानदोषः, स तु 'द्विषन्मनोऽपि प्रगताः कृतान्तराः' इति पाठेन समाधेयः॥ १७॥

---

সেই অর্থপতি, পর্ব্বতগণের মধ্যে স্ফটিকমণি-নির্ম্মল কৈলাস পর্ব্বতের ন্যায়, মহাবুদ্ধিমান্, ক্ষমাশীল ও বেদশাস্ত্রজ্ঞ উৎকৃষ্ট পুত্রগণের মধ্যে চিত্রভানু নামে পুত্র লাভ করিয়াছিলেন॥ ১৬॥

যে মহাত্মার বহুদূরগামী ও নিষ্কলঙ্ক চন্দ্রকলার ন্যায় নির্ম্মলকান্তিশালী, গুণগ্রাম,

दिशामलीकालकभङ्गतां गत स्त्रयीवधूकर्णतमालपल्लवः।
चकार यस्याध्वरधूमसञ्चयो मलीमसः शुक्लतरं निजं यशः ॥ १८ ॥
सरस्वतीपाणि-सरोजसम्पुट-प्रमृष्टहोमश्रमशीकराम्भसः।
यशोंऽशुशुक्लीकृतसप्तविष्टपा-त्ततः सुतो बाण इति व्यजायत ॥१९॥

---

दिशामिति। दिशां प्राच्यादीनां वधूरूपाणामिति तात्पर्य्यं, अलीकेषु ललाटेषु ये अलकाश्चूर्णकुन्तलास्तेषां भङ्गता रचनाविशेषरूपत्वं गतः प्राप्तः। त्रयी ऋग्यजुःसामवेदानां त्रयमेव वधूः तस्याः कर्णे तमालपल्लवः तमालतरुकिसलयस्वरूपः। उभयत्रापि स्वभावकृष्णवर्णत्वादिति भावः। मलीमसः स्वभावमलिनः यस्य चित्रभानोः, अध्वरधूमसञ्चयः यज्ञाग्निधूमसमूहः निजं स्वकीयं यशः स्वभावशुक्लां सुख्यातिं शुक्लतरं अतिशयेन शुक्लं चकार। विद्याविनयादिगुणग्रामजनिता सुख्यातिः नियतयज्ञानुष्ठानात् धर्म्माचारपरायणतया अपि प्रकाशेन बहुलीबभूवेति सरलार्थः।

अत्र अध्वरधूमसञ्चये केशरचनाविशेषत्वारोपः शब्दः, दिक्षु वधूत्वारोपस्तु आर्थ इत्येकदेशविवर्त्ति रूपकं त्रय्यां वधूत्वारोपः धूमसञ्चये तमालपल्लवत्वारोपे निमित्तमिति परम्परितरूपकं तथा मलीमसो धूमसञ्चयो यशः शुक्लतरं चकारेति कारणगुणविरुद्धकार्य्यगुणोत्पत्तेर्विषमालङ्कारश्च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

"अलीकमप्रिये भाले वितथे—" इति हैमः ॥ १८ ॥

सरस्वतीति। सरस्वत्या वाग्देव्या पाणिसरोजसम्पुटेन करकमलयुगलेन प्रमृष्टानि प्रोञ्छितानि होमश्रमस्य होमकर्म्मायासस्य शीकराम्भांसि बिन्दुभूतजलानि स्वेदजलबिन्दवो यस्य तस्मात्। तथा यशसः सुख्यातेः अंशुभिः किरणैः शुक्लीकृतानि सप्त विष्टपानि भूरादीनि सप्त भुवनानि येन तस्मात्। ततश्चित्रभानोः बाण इति प्रसिद्धः बाणनामा सुतः पुत्रः व्यजायत अभवत्।

अत्र सरस्वत्याः पाणिपद्मद्वयेन घर्म्मवारिबिन्दूनां प्रमार्ज्जनासम्बन्धेऽपि तत्सम्बन्धोक्तेरेकातिशयोक्तिः, तथा यशोंऽशुभिः, सप्तभुवनानां शुक्लीकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेर्द्वितीया चातिशयोक्तिरित्यनयोर्मिथो नैरपेक्ष्यात् संसृष्टिः।

"विष्टपं भुवनं जगत्।" इत्यमरः ॥ १९ ॥

---

নিজমাহাত্ম্যে প্রবেশপথ পাইয়া অঙ্কুশ তুল্য বিদারণকারী নরসিংহের নখসমূহের ন্যায় শক্রর হৃদয়েও প্রবেশ করিয়াছিল ॥ ১৭ ॥

যাঁহার যজ্ঞীয় অগ্নির মলিন ধূমসমূহ, দিগ্‌বধূগণের ললাটদেশে কেশরচনাস্বরূপ এবং বেদ-বধূর কর্ণে তমালপল্লবস্বরূপ হইয়া স্বকীয় যশকে সমধিক শুভ্রবর্ণ করিয়াছিল ॥ ১৮ ॥

সরস্বতীদেবী স্বকীয় পাণিকমলে যাঁহার হোমপরিশ্রম-জনিত 'ঘর্ম্মজলবিন্দুসকল মুছিয়া দিতেন এবং যাঁহার যশের কিরণ সপ্ত ভুবনকে শুক্লবর্ণ করিয়াছিল, সেই চিত্রভানু হইতে 'বাণ' নামে একটি পুত্র জন্মিয়াছিল ॥১৯॥

द्विजेन तेनाक्षतकण्ठकौण्ठ्यया महामनोमोहमलीमसान्धया
अलब्धवैदग्ध्यविलासमुग्धया धिया निबद्धेयमतिद्वयी कथा॥ २०॥

---

द्विजेनेति। तेन द्विजेन विप्रेण बाणेन, अक्षतं अविनष्टं कण्ठकौण्ठ्यं वाग्विस्फारि कण्ठस्य मान्द्यं बालस्वभावसुलभवाग्वैकल्यं यस्यां तया, महान् यो मनोमोहः बालत्वेन चित्तविकलता तेन मलीमसा मलिना अप्रसन्ना अतएव अन्धा सदसन्निरूपणाक्षमा तया। तथा अलब्धेन अप्राप्तेन वैदग्ध्यविलासेन पाण्डित्य-चातुर्य्येण करणेन, मुग्धा मूढ़ा तया पाण्डित्यचातुर्य्याभावेन नितान्तसरलयेत्यर्थः, धिया बुद्ध्या इयं कादम्बरीरूपा, निन्द्यत्वे द्वयौ अतिक्रान्ता इत्यतिद्वयी निकृष्टत्वे अद्वितीया, गूढ़ोऽर्थस्तु उत्कृष्टत्वे अद्वितीया कथा कथाख्यः काव्यविशेषः, निबद्धा ग्रथिता विरचिता। अपरिणतबुद्धिसमये खल्वियं विरचितेति तात्पर्य्यं, तेन बालचापल्यजनितदोषः सुधीभिर्मार्जनीय इति भावः।

अत्र प्रथमपादे छेकानुप्रासः अन्येषु तु वृत्त्यनुप्रास इत्युभयोः संसृष्टिः॥ २०॥

---

যাহাতে কণ্ঠের জড়তা বিলুপ্ত হয় না এবং মনের নিতান্ত চঞ্চলতা বশতঃ যে বুদ্ধি মলিন ও সদসদ্বিবেচনাহীন, আর পাণ্ডিত্যচাতুর্য্য লাভ না করায় যে বুদ্ধি নিতান্ত সরল; ব্রাহ্মণ বাণভট্ট সেই বুদ্ধি অনুসারে এই অদ্বিতীয় কথাকাব্য রচনা করিয়াছেন ॥২০॥

---

# कादम्बरी।



## कथामुखं



### शूद्रकवर्णनं।



आसीदशेष-नरपति-शिरः-समभ्यर्च्चित-शासनः पाकशासन इवापरः (क) चतुरुदधि-माला-मेखलाया भुवो भर्त्ता (ख) प्रतापानुरागावनत-समस्त सामन्त-

(क). अथेदानीं कथामारभते आसीदित्यादिना। आसीदिति क्रियापदस्य 'राजा शूद्रको नाम' इति वक्ष्यमाणकर्त्तृपदेनान्वयः। अशेषैः सकलैः नरपतिभिः भूपतिभिः कर्त्तृभिः, शिरोभिर्मस्तकैः करणैः, समभ्यर्च्चितं सम्मानेन गृहीतं शासनं आदेशो यस्य सः, अतएव अपरो देवराजादन्यो द्वितीयः पाकशासन इन्द्र इव। पाकं नामासुरं शासितवान् दमितवानिति पाकशासनः।

अत्र भावाभिमानिनी वाच्या द्रव्योत्प्रेक्षालङ्कारः शासनपदावृत्तेर्यमकञ्च इत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः। न च शासनपदावृत्तेर्लाटानुप्रास इति वाच्यं शक्यार्थैकत्वे केवलतात्पर्य्यतो भेदएव तदङ्गीकारात्, अत्र तु शक्यार्थस्यापि भेदात्।

(ख) चतुरिति। चतुर्णां भूमण्डलस्य चतसृषु दिक्षु स्थितानां उदधीनां सागराणां माला पङ्क्तिरेव मेखला काञ्ची यस्याः तस्याः, भुवो वसुधायाः भर्त्ता पतिः।

अत्र स्त्रीपुंलिङ्गाभ्यां पृथिवीशूद्रकयोर्नायिकानायकव्यवहारसमारोपात् समासोक्तिरलङ्कार एव नत्वेकदेशविवर्त्ति रूपकं, तत्कारणन्तु साहित्यदर्पणे समासोक्तिप्रस्तावे सन्नुसन्धेयम्।

দ্বিতীয় ইন্দ্রের ন্যায় শূদ্রকনামে এক রাজা ছিলেন। সমস্ত রাজগণ তাঁহার আদেশ সগৌরবে শিরোধার্য্য করিতেন। তিনি চারিটি সমুদ্র (মালারূপ মেখলা)-পরিবেষ্টিত সমগ্র ভূমণ্ডলের অধীশ্বর ছিলেন, অধীনস্থ সকল রাজগণ তাঁহার প্রভাবে ও স্নেহে বশীভূত থাকিতেন; তিনি সম্রাটের যোগ্য সকল লক্ষণ-সম্পন্ন ছিলেন, চক্রপাণি বিষ্ণুর ন্যায় তাঁহার করকমলেও শঙ্খ-চক্র-

चक्र: (ग) चक्रवर्त्तिलक्षणोपेत: (घ) चक्रधर इव करकमलोपलक्ष्यमाण-शङ्ख-चक्र-लाञ्छन: (ङ) हर इव जितमन्मथ: (च) गुह इवाप्रतिहतशक्ति:, (छ) कमलयोनिरिव विमानीकृतराजहंसमण्डल: (ज) जलधिरिव लक्ष्मी-प्रसूति: (झ) गङ्गाप्रवाह इव भगीरथपथप्रवृत्त: (ञ) रविरिव प्रतिदिव-

---

(ग) प्रतापेति। प्रतापानुरागाभ्यां कोषदण्डजतेजोवात्सल्याभ्यां अवनतं वशीभूतं समस्तं सकल सामन्तचक्रं अधिकृतराजसमूहो यस्य। एतेन न केवलं तस्य प्रजामण्डलं प्रभाववशाद्वशीभूतमासीत् किन्तु तदीयवात्सल्यवशादपीति सूचितम्।

(घ) चक्रेति। चक्रवर्त्तिलक्षणै: सार्व्वभौमचिह्नै: करतलरक्तिमादिभि: उपेतो विशिष्ट:। तथा च सामुद्रके—

"अतिरक्त: करो यस्य ग्रथिताङ्गुलिको मृदु:। चापाङ्कुशाङ्कित:(!) सोऽपि चक्रवर्त्ती भवेद्ध्रुवं॥"

(ङ) चक्रेति। चक्रधरश्चक्रपाणिर्विष्णुरिव करकमले पाणिपद्मतले उपलक्ष्यमाणं दृश्यमानं शङ्खचक्र लाञ्छनं शङ्खचक्राकृतिरेखारूपं चिह्नं, अन्यत्र तु वास्तविकशङ्खचक्ररूपं चिह्नं यस्य स:।

अत्र पूर्णोपमालङ्कार:, चक्रशब्दस्यासकृत्पाठाद्वृत्त्यनुप्रासश्चेत्यनयो: संसृष्टि:।

(च) हर इति। हर: शिव इव जितमन्मथ: पराभूतमदन:। ललाटलोचनवह्निना भस्मीकरणात् राजपक्षे तु समधिकरूपवत्त्वादिति भाव:। पूर्णोपमा।

(छ) गुह इति। गुह: कार्त्तिकेय इव अप्रतिहता केनापि न विफलीकृता शक्ति: प्रभावोत्साह मन्त्रजं सामर्थ्यं अस्त्रविशेषश्च यस्य स:। पूर्णोपमा।

(ज) कमलेति। कमलं नारायणनाभिपद्मं योनिरुत्पत्तिस्थानं यस्य स कमलयोनि र्ब्रह्मा इव विगत: पराजयेन विनष्ट: मानो गर्वो यस्य तद्विमानं तादृशं कृतं राजहंसानां श्रेष्ठनृपतीनां मण्डलं समूहो ये स:, ब्रह्मपक्षे तु विमानीकृतं गगने वाहनीकृतं राजहंसमण्डलं पक्षिविशेषसमूहो येन स:। पूर्णोपमा।

राजानो हंसा इवेति राजहंसा: "उपमितं व्याघ्रादिभि: सामान्याप्रयोगे" इति कर्म्मधारय:। "स्युरुत्तर पदे व्याघ्रेत्याद्यमरप्रामाण्यात्तस्य श्रेष्ठराजवाचकत्वम्। "व्योमयानं विमानोऽस्त्री" इत्यमर:।

(झ) जलधिरिति। जलधि: समुद्र इव लक्ष्म्या लक्ष्मीदेव्या: धनसम्पत्तेश्च प्रसूतिरुत्पत्तिस्थानं एकत्र देवासुरैर्मथनात् अन्यत्र नीतिकौशलादिति भाव:। पूर्णोपमा।

(ञ) गङ्गेति। गङ्गाया: प्रवाह ओघ इव भगीरथस्य तदाख्यस्य सूर्य्यवंशीयनृपतिविशेषस्य पथि

---

চিহ্ন দেখা যাইত; তিনি শিবের তুল্য মদনবিজয়ী ও কার্ত্তিকেয়ের ন্যায় অপ্রতিহতশক্তি ছিলেন; তিনি রাজহংসবাহন ব্রহ্মার ন্যায় প্রভাবশালী ছিলেন এবং বিপক্ষ রাজগণকে পরাজয় করিয়া অভিমানহীন করিয়াছিলেন। সমুদ্র যেমন লক্ষ্মীদেবীর উৎপত্তিস্থান, শূদ্রকও তেমন ধন সম্পত্তির উৎপত্তিস্থান ছিলেন। গঙ্গার প্রবাহ যেরূপ ভগীরথের রথচক্রপথে প্রবাহিত হইয়াছিল

सोपजायमानोदयः (१) (ट) मेरुरिव सकलोपजीव्यमान-(२) पादच्छायः (ठ) (३) दिग्गज इवानवरतप्रवृत्त दानार्द्रीकृतकरः (ड) कर्त्ता महाश्चर्याणाम्,। आहर्त्ता क्रतूनाम्, आदर्शः सर्व्वशास्त्राणाम्, उत्पत्तिः कलानाम्, कुलभवनं गुणानाम्, आगमः काव्यामृतरसानाम्, (ढ) उदयशैलो मित्रमण्डलस्य, (ण)

---

रथचक्रकृतमार्गे सदाचारपद्धतौ च प्रवृत्तः प्रचलितः। गङ्गा हि हिमालयान्निपत्य मर्त्त्यमण्डले भगीरथरथचक्रकृतपथे प्रसरन्ती कपिलाभिशापभस्मीभूतान् सगरसुतानुद्धारयितुं पातालं प्रविवेशेति; राजा च भगीरथः परमसदाचारवानासीदिति च पौराणिकी वार्त्ता। पूर्णोपमा।

(ट) रविरिति। रविः सूर्य्य इव प्रतिदिवसं उपजायमान उत्पद्यमानः, उदय उदयाचलसम्बन्धः अभ्युदयश्च यस्य सः। पूर्णोपमा।

(ठ) मेरुरिति। मेरुः सुमेरुपर्व्वत इव सकलैर्देवैर्जनैश्च उपजीव्यमाना आश्रीयमाणा पादानां प्रत्यन्तपर्व्वतानां छाया अनातपभागः, पादयोश्छाया चरणकृतरक्षा च यस्य सः। "एकविंशत्यमी स्वर्गा निर्म्मिता मेरुमूर्द्धनि" इत्यादित्यपुराणात् सुमेरुसन्निहितपर्वतानां छायासु देवा विचरन्तीति पुराणप्रवादः। पूर्णोपमा।

(ड) दिगिति। दिग्गज ऐरावतादिको दिङ्नाग इव अनवरतप्रवृत्तेन सर्वदा जातेन दानेन मदजलेन धनादिदानजलेन च आर्द्रीकृतः स्तिमितः करः शुण्डा पाणिश्च यस्य सः। पूर्णोपमा।

(ढ) कर्त्तेति। महाश्चर्य्याणां प्रबलशत्रुविजयादिविस्मयावहव्यापाराणां कर्त्ता निर्वाहकः। क्रतूनां यज्ञानां आहर्त्ता अनुष्ठाता। सर्वशास्त्राणां वेदादीनां आदर्शो दर्पणः। यथा दर्पणे प्रतिविम्बितपदार्थाः परिलक्ष्यन्ते तथा तस्मिन्नपि सर्वाणि शास्त्राण्यभ्यासवशाल्लोकैः परिलक्ष्यन्ते स्मेति भावः। कलानां नृत्यगीतादिचतुःषष्टिकलाविद्यानां उत्पत्तिः शिक्षादानादुद्भवस्थानं। गुणानां दयादाक्षिण्यादीनां कुलभवनं कुलक्रमागताश्रयस्थानं तत्रैव तेषां चिरावस्थानादिति भावः। काव्यानां ये अमृतरसाः पीयूषसदृशश्रृङ्गारादिरसास्तेषां आगम उत्पत्तिस्थानं। महाकवित्वेनोत्कृष्टकाव्यनिर्म्माणादिति भावः।

अत्र एकस्य राज्ञोविषयभेदेनानेकधोल्लेखादुल्लेखालङ्कारः।

(ण) उदयेति। मित्रमण्डलं सुहृत्समूह एव मित्रमण्डलं सूर्य्यमण्डलं तस्य, उदयशैलः पूर्वपर्वतः,

---

মহারাজ শূদ্রকও সেইরূপ ভগীরথের আচরিত ধর্ম্মপথে চলিতেন। সূর্য্যের যেমন প্রতিদিন উদয় হয়, শূদ্রকেরও তেমন প্রতিদিন অভ্যুদয় হইত। দেবগণ যেরূপ সুমেরুর নিকটবর্ত্তী অন্যান্য পর্ব্বতের ছায়া আশ্রয় করেন, প্রজাগণ সেইরূপ শূদ্রকের চরণের ছায়া আশ্রয় করিয়াছিল। দিগ্‌হস্তীর শুণ্ড যেমন কপোলনিঃসৃত মদজলে সর্ব্বদা আর্দ্র থাকে, শূদ্রকের হস্তও তেমন সর্ব্বদা দানজলে

---

(१)...पचीयमानोदयः। (२) सकलभुवनो, सकलभुवनतलो...। (३) बृहस्पतिरिव सकलशास्त्रार्थतत्त्वज्ञः इत्यधिकः पाठः क्वचित्।

उत्पातकेतुरहितजनस्य, (त) प्रवर्त्तयिता गोष्ठीवन्धानाम्, आश्रयो रसिकानाम्, (थ) प्रत्यादेशो धनुष्मताम्, (द) धौरेयः साहसिकानाम्, अग्रणीर्विदग्धानाम्, वैनतेय इव विनतानन्दजननः, वैण्य (१) इव चापकोटि-समुत्सारितसकलाराति-(२) कुलाचलो राजा शूद्रको नाम। (ध)

---

सूर्य्यो यथा पूर्वपर्वते उदयं लभते तथा सुहृत्समूहस्तस्मिन्नाश्रिते सत्युन्नतिं लेभे इति भावः।

अत्र श्लेषेण सुहृत्समूहे सूर्य्यमण्डलत्वारोपो राजन्युदयपर्वतत्वारोपे निमित्तमिति श्लिष्टपरम्परितरूपकमलङ्कारः।

(त) उत्पातेति। अहितजनस्य शत्रुलोकस्य, उत्पातकेतुः विनाशसूचको धूमकेतुः। तदाविर्भाव एव तेषां विनाशारम्भादिति भावः।

अत्र राजनि केवलोत्पातकेतुत्वारोपात् निरङ्गं केवलरूपकमलङ्कारः।

(थ) प्रवर्त्तयितेति। गोष्ठीवन्धानां सभास्थापनानां प्रवर्त्तयिता निष्पादयिता। स्थाने स्थाने सत्सभास्थापक इत्यर्थः। रसिकानां रसज्ञजनानां आश्रयः अवलम्बनं।

(द) प्रत्यादेश इति। धनुष्मतां प्रशस्तधनुर्द्धराणां प्रत्यादेशो निराकृतिः निराकरणकारणमित्यर्थः।

अत्र प्रत्यादेशरूपकार्य्यस्य तत्कारणेन सहाभेदेनाभिधानात् हेतुर्नामालङ्कारः।

(ध) धौरेय इति। साहसिकानां समरादौ हठकारिणां धौरेयः धुरन्धरः प्रधानः। विदग्धानां चतुराणां अग्रणीरग्रगण्यः। वैनतेयो गरुड़ इव विनतानां वशीभूतानां जनानां विनतायाश्च आनन्दजननः सद्व्यवहारेण प्रीतिकरः। वैण्यो वेणराजपुत्रः पृथुरिव चापकोट्या कोटीसंख्यकधनुर्भिः असंख्यधनुर्द्धरसैन्यैरित्यर्थः। अन्यत्र तु कार्म्मुकाग्रभागेन समुत्सारिता उत्सादिताः स्थानान्तरं नीताश्च सकलारातयः समस्तशत्रवः कुलाचलाः महेन्द्रादयः कुलपर्वता इव येन सः।

अनयोः पूर्णोपमालङ्कारः।

---

আর্দ্র থাকিত। তিনি, মহাবিস্ময়কর কার্য্য ও যজ্ঞানুষ্ঠান করিতেন এবং সকল শাস্ত্রের আদর্শ, নৃত্যগীতাদি কলাবিদ্যার শিক্ষাদাতা, সর্ব্বদা দয়াদাক্ষিণ্যপ্রভৃতি গুণের আধার ও অমৃত তুল্য কাব্যরসের উৎপত্তিস্থান ছিলেন। উদয়াচল যেমন সূর্য্যের উদয়স্থান, তিনিও তেমন সুহৃদ্‌গণের উন্নতিস্থান এবং শত্রুদিগের ধূমকেতুস্বরূপ ছিলেন, দেশে ও নগরে সভা স্থাপন করিয়াছিলেন, আর তিনি রসিক লোকের আশ্রয়, ধনুর্দ্ধরদিগের প্রতিরোধক, সাহসিকদিগের মধ্যে প্রধান ও চতুরগণের অগ্রগণ্য ছিলেন এবং গরুড় যেমন নিজমাতা বিনতার আনন্দজনক, তিনিও তেমন বশতাপন্ন লোকের আনন্দজনক ছিলেন। আর রাজা পৃথু, যেমন ধনুর অগ্রভাগদ্বারা মহেন্দ্রপ্রভৃতি কুলপর্ব্বতগণকে অপসারিত করিয়াছিলেন, তিনিও তেমন অসংখ্য ধনুর্দ্ধর সৈন্যদ্বারা সকল শত্রুগণকে উৎসন্ন করিয়াছিলেন।

---

(१) वैण्यः, पृथुः....। (२) समुत्सारितारातिः...।

नाम्नैव यो निर्भिन्नारातिहृदयो विरचितनरसिंह-(१) रूपाडम्बरं एकविक्रमाक्रान्तसकलभुवनतलो विक्रमत्रयायासितभुवनत्रयं (२) जहासेव (३) वासुदेवम्। (न)

अतिचिरकाललग्नमतिक्रान्तकुनृपतिसहस्रसम्पर्ककलङ्कमिव क्षालयन्ती यस्य विमले (४) कृपाणधाराजले चिरमुवास राजलक्ष्मीः (५)। (प)

---

पृथिवीसमतलीकरणप्रवृत्तो राजा पृथुर्धनुरग्रभागेन कुलपर्वतानपसारयामासेति विष्णुपुराणवार्त्ता। कुलपर्वता यथा—

"महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥"

(न) नाम्नेति। यः शूद्रकः, नाम्नैव स्वनामाकर्णनमात्रेणैव निर्भिन्नं भयोत्पादनेन विदारितं अरातीनां हृदयं येन सः। विरचितः हिरण्यकशिपुवक्षोविदारणाय विहितः नरसिंहरूपस्य नरसिंहरूपधारणस्य आडम्बरो व्यापारो येन तं। एकविक्रमेण एकमात्रपराक्रमेण आक्रान्तं आयत्तीकृतं सकलभुवनतलं येन सः। विक्रमत्रयेण पादन्यासत्रयेण आयासितं खिन्नं कृतं भुवनत्रयं येन तं तादृशं वासुदेवं नारायणं जहासेव उपहसितवानिव। तथा च शूद्रकः स्वनामश्रावणमात्रद्वारेणैव वैरिणां हृदयं विदारितवान्, नारायणस्तु केवल-हिरण्यकशिपुहृदयविदारणाय नृसिंहमूर्त्तिधारणाडम्बरं कृतवान्, तथा शूद्रकेन अनायासेन एकविक्रमेणैव चतुर्दशभुवनान्याक्रान्तानि, नारायणेन तु त्रिभिरेव विक्रमैः केवलानि त्रीण्येव भुवनान्याक्रान्तानि सुतरां शूद्रककृतो नारायणोपहासो युज्यत एवेति भावः।

अत्रोपमानादुपमेयस्याधिक्यवर्णनात् व्यतिरेकालङ्कारः, क्रियोत्प्रेक्षा च, अनयोरङ्गाङ्गिभावेन सङ्करः।

(प) अतीति। अतिचिरकालादवधि लग्नं आत्मनि संयुक्तः, अतिक्रान्तं अतीतं यत् कुनृपतिसहस्रं कदर्थ्यराजसमूहः तस्य सम्पर्केण संसर्गेण यः कलङ्को दूषितचिह्नं पापञ्च तं, क्षालयन्तीव प्रक्षालनेन दूरीकुर्वतीव यस्य शूद्रकस्य विमले निर्म्मले, कृपाणधारा खड्गस्य निशितांश एव जलं तस्मिन्। अपरोऽपि देहलग्नं पङ्कादिकं जलेन क्षालयति। असिबलेनैव शूद्रको राजलक्ष्मीमायत्तीकृतवानिति भावः।

अत्र क्षालयन्तीवेति क्रियोत्प्रेक्षा, कृपाणधाराजल इति निरङ्गं केवलरूपकञ्च अनयोरङ्गाङ्गिभावेन सङ्करः।

---

যিনি কেবল নামদ্বারাই, ভয়োৎপাদন পূর্ব্বক শত্রুগণের হৃদয় বিদারণ করিয়া এবং একমাত্র বিক্রমে সমগ্র ভূমণ্ডল আয়ত্ত করিয়া, হিরণ্যকশিপুর হৃদয় বিদারণের জন্য নরসিংহমূর্ত্তি ধারণের আড়ম্বরকারী ও তিনবিক্রমে (পাদক্ষেপে) ত্রিভুবনের আয়াসজনক নারায়ণকে যেন উপহাস করিয়াছিলেন।

পূর্ব্বে যে সকল দুর্ব্বৃত্ত রাজা রাজত্ব করিয়া গিয়াছেন, তাঁহাদের সংসর্গে বহুকাল হইতে আপনাতে যে কলঙ্ক লাগিয়াছিল, রাজলক্ষ্মী যেন সেই কলঙ্ক প্রক্ষালন করিবার জন্য রাজা শূদ্রকের তরবারির ধারা-জলে চিরকাল অবস্থান করিয়াছিলেন।

---

(१) नारसिंह…। (२) आयासितं आयासितात्मानं। (३) हसति स्मेव।
(४) क्वचित् विमले' इति पाठो नास्ति। (५) लक्ष्मीः।

यस्य मनसि धर्म्मेण, कोपे यमेन, प्रसादे धनदेन, प्रतापे वह्निना, भुजे भुवा, दृशि श्रिया, वाचि सरस्वत्या, मुखे शशिना, बले मरुता, प्रज्ञायां सुरगुरुणा, रूपे मनसिजेन, तेजसि सवित्रा च वसता सर्वदेवमयस्य प्रकटितविश्वरूपाकृते-रनुकरोति भगवतो नारायणस्य। (फ)

यस्य च मदकल-करि-कुम्भपीठी-पाटनमाचरता (१) लग्न-स्थूलमुक्ताफलेन दृढ़-मुष्टि-निष्पीड़न-निष्ठ्यूत-धाराजलबिन्दु-(२) दन्तुरेणेव कृपाणेनाकृष्यमाणा सुभटोरःकपाट-घटित (३) कवच-सहस्रान्धकार-मध्यवर्त्तिनी करि-कर-(४) तट-

(फ) यस्येति। किञ्चेति चार्थः। यः शूद्रक इति वक्ष्यमाणाया अनुकरोतीति क्रियायाः कर्त्ता। मनसीत्यादीनि सप्तम्यन्तपदानि वसतेत्यस्य अधिकरणवाचकानि। धर्म्मेणेत्यादीनि च करणतृतीयान्तपदानि वसतेत्यस्य कर्त्तृविशेषणानि। प्रसादे अनुग्रहे धनदेन कुवेरेण। भुवा पृथिव्या। दृशि चक्षुषि श्रिया लक्ष्म्या। मरुता वायुना। प्रज्ञायां बुद्धौ सुरगुरुणा वृहस्पतिना। मनसिजेन कामेन। सवित्रा सूर्य्येण। प्रकटिता प्रकाशिता विश्वरूपाकृतिः "पश्यामि देवांस्तव देव! देहे" इत्यादिगीतोक्ता विश्वरूपमूर्त्तिर्येन तस्य। "कृत्त्वः प्रतियत्न इत्यनेन कृञः कर्म्मणि षष्ठीति" भानुचन्द्रः। शेषे षष्ठीति श्रीपतिः। अनुकरोतीति "प्रयोगतश्चे"त्यतीते वर्त्तमाना। अत्रार्थोऽयमुपमालङ्कारः।

(व) यस्येति। यस्य शूद्रकस्य समोपमित्यन्वयः। मदकलानां मदमत्तानां करिणां हस्तिनां यानि कुम्भपीठानि मस्तककुम्भदेशा स्तेषां पाटनं विदारणं आचरता विदधता, अतएव लग्नानि संसक्तानि स्थूलानि वृहन्ति मुक्ताफलानि मौक्तिकानि यस्मिन् तेन, दृढमुष्टिना यत् निष्पीड़नं धारणं तेन निष्ठ्यूता इव निःसृता इव धारा निश्चितास्त एव जलबिन्दवः वा...रकणश्रेणी तै र्दन्तुरेण असमानेन उन्नतावनतेन कृपाणेन असिना, आकृष्यमाणेव, तथा सुभटानां प्रशस्तयोद्धृणां उरांसि वक्षांसि कपाटा इव तेषु घटितानि संयोजितानि कवच-सहस्राणि लौहवर्म्मसमूहा अन्धकारा इव तेषां मध्यवर्त्तिनी अन्तर्गता, राजलक्ष्मीः विपक्षराजश्रीः, करिणां करतटेभ्यः शुण्डामूलदेशेभ्यः गलितानि निर्गतानि यानि मदजलानि तेषां आसारेण धारासम्पातेन दुर्द्दिनं मेघजनितान्धकारो यासु तासु, गाढ़ान्धकारतासूचनायैतदुक्तं, समराः संग्रामा निशा इव तासु, अभिसारिका

• (फ) চিত্তে ধর্ম্ম, ক্রোধে যম, অনুগ্রহে কুবের, প্রতাপে অগ্নি, বাহুতে পৃথিবী, নয়নে লক্ষ্মী বাক্যে সরস্বতী, মুখে চন্দ্র, বলে বায়ু, বুদ্ধিতে বৃহস্পতি, রূপে কামদেব এবং তেজে সূর্য্য বা করায়, যে শূদ্রক রাজা সর্ব্বদেবময় বিশ্বরূপধারী ভগবান্ নারায়ণের অনুকরণ করিয়াছিলেন

(ব) মহারাজ শূদ্রক সমরে উপস্থিত হইয়া তরবারির আঘাতে বিপক্ষদিগের মদমত্ত হস্তিসমূহের কুম্ভ বিদারণ করিতেন, তাহাতে বড় বড় মুক্তা তরবারিতে লাগিয়া থাকিত তখন দৃঢ়মুষ্টিতে নিষ্পীড়ন করায় যেন ধাররূপ জলবিন্দু নির্গত হইয়া তরবারিখানাকে উচু নী

(१) आचरतः, विदधतः। (२) —निपीड़नात् निष्ठ्यूतजलः...। (३)...विघटित...। (४)...करट...

गलित-मदजलासार-दुर्दिनाखभिसारिकेव समरनिशासु समीपमसकृदाजगाम (१) राजलक्ष्मीः। (व)

यस्य च हृदयस्थितानपि पतीन् दिधक्षुरिव (२) प्रतापानलो वियोगिनीनामपि रिपुसुन्दरीणामन्तर्जनितदाहो (३) दिवानिशं जज्वाल। (भ)

यस्मिंश्च राजनि जितजगति परिपालयति (४) महीं चित्रकर्मसु वर्णसङ्कराः, रतेषु केशग्रहाः, काव्येषु दृढ़बन्धाः, शास्त्रेषु चिन्ताः, स्वप्नेषु

---

दसकृदेता नायिकेव यस्य शूद्रकस्य समीपं असकृत् युद्धस्य बहुत्वात् वारंवारं आजगाम वशवर्त्तिनी बभूवेत्यर्थः।

अत्र आकृष्यमाणेवेति क्रियोत्प्रेक्षा, उरःकपाटेति कवचसहस्रान्धकारेति च लुप्तोपमाद्वयं अभिसारिकेवेत्युपमा च, एतेषामङ्गाङ्गिभावेन सङ्करः।

"अभिसारयते कान्तं या मन्मथवशंवदा। स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका। इति साहित्यदर्पणः। "दुर्दिनं जलदध्वान्त" मिति रत्नकोषः।

(भ) यस्येति। यस्य च शूद्रकस्य, प्रतापः कोषदण्डजं तेज एव अनलो वह्निः, वियोगिनीनामपि समरे पूर्वमेव पतिव्यापादनात् विरहिणीनामपि पतिविनाशशङ्कया संयोगिनीनां का कथेति भावः, रिपुसुन्दरीणां वैरिवधूनां अन्तर्जनितः मनस्तुपादितो दाहो येन सः, हृदयस्थितानपि अर्थात्तासां रिपुसुन्दरीणां सततभावनया चित्तगतानपि पतीन् दिधक्षुरिव दग्धुमिच्छुरिव सन्। एतेन महाप्रतापशालित्वं सूचितम्।

अत्र प्रतापानल इति निरङ्गं केवलरूपकं दिधक्षुरिवेति क्रियोत्प्रेक्षा च अनयोरङ्गाङ्गिभावेन सङ्करः।

(म) यस्मिन्निति। चित्रकर्मसु आलेख्यानर्माणेषु वर्णानां नीलपीतादीनां सङ्कराः मिश्रणानि, न तु समाजेषु च ब्राह्मणादिभ्यः कन्यकातीनामुत्पत्तिरूपा वर्णसङ्कराः, व्यभिचाराभावात्। प्रजानामासन्निति वचनमार्गेण सर्वत्रान्वयः। रतेषु मैथुनेषु केशग्रहाः सुविधाविधानाय केशाकर्षणानि, न तु समरेषु, तदभावात्। काव्येषु दृढ़बन्धाः समासबाहुल्यादिना शब्दानां प्रगाढ़योजनानि, न तु कारागारेषु दृढ़बन्धाः, अपराधाभावात्। शास्त्रेषु चिन्ताः, न तु उदरान्नादिषु, समृद्धिपूर्णत्वात्। स्वप्नेषु विप्रलम्भाः इष्टपदार्थानां सहसान्तर्धानात् प्रतारणाः, न तु अन्यसमयेषु, सर्वत्र वास्तविकव्यवहारात्। छत्रेषु आतपत्रेषु कनकदण्डाः स्वर्णयष्टयः, न तु

---

করিয়াছে বলিয়া বোধ হইত; এদিকে মহাযোদ্ধাদিগের কপাটের ন্যায় বিস্তীর্ণ বক্ষঃস্থলে লৌহবর্ম্মগুলি অন্ধকারের ন্যায় প্রতীতি হইত, আর হস্তিগণের শুণ্ড হইতে নির্গত মদজলবৃষ্টিতে গাঢ় অন্ধকার হইত, তাহাতে সমরাঙ্গন রাত্রির ন্যায় হইয়া পড়িত, তখন অভিসারিকা নায়িকার মত বিপক্ষের রাজলক্ষ্মী, যেন সেই তরবারিকর্ত্তৃক আকৃষ্ট হইয়া রাজা শূদ্রকের নিকট বার বার উপস্থিত হইতেন।

(ভ) যে রাজা শূদ্রকের প্রতাপানল, বিরহিণী শত্রুবনিতাদিগেরও হৃদয়ে সন্তাপ জন্মাইয়া তাহাদের হৃদয়স্থিত পতিদিগকেও যেন দগ্ধ করিতে ইচ্ছা করিয়া দিবারাত্রি জ্বলিতে থাকিত।

---

(१) सकृदगात्। (२) धक्ष्यन्निव। (३)...दाहो। (४) पालयति।

विप्रलम्भाः, छत्रेषु कनकदण्डाः, ध्वजेषु प्रकम्पाः, गीतेषु रागविलसितानि, करिषु मदविकाराः, चापेषु गुणच्छेदाः, गवाक्षेषु जालमार्गाः, शशिकृपाण-कवचेषु कलङ्काः, रतिकलहेषु दूतसम्प्रेषणानि, (१) सार्य्यक्षेषु शून्यगृहाः प्रजानामासन्। (म)

---

लोकेषु कनकदण्डा अर्थदण्डाः, अपराधाभावात्। ध्वजेषु पताकासु प्रकम्पाः चाञ्चल्यानि, न तु लोकचित्तेषु भयाभावात्। "ध्वजं चिह्ने पताकायां ध्वजः शौण्डिकशेफसोः। खट्वाङ्गे च..." इति विश्वः। गीतेषु रागविलसितानि वसन्तादिरागव्यवहाराः, न तु लोकेषु रागविलसितानि, मात्सर्य्याचरणानि, सर्वेषामेव नितान्तसच्चरित्रत्वात्। "रागः क्लेशादिके रक्ते मात्सर्य्ये लोहितादिषु।" इति त्रिकाण्डशेषः। करिषु हस्तिषु मदविकाराः तेजोजनितविकृतयः, न तु जनेषु मदविकारा अहङ्कारकृतस्वभाववैषम्यानि, तदभावात्। चापेषु गुणच्छेदाः धनुःसु मौर्वीकर्त्तनानि, न तु लोकेषु गुणच्छेदा दयाविनयादिगुणविलोपाः, तादृश-गुणानां सर्वदा सद्भावात्। गवाक्षेषु वातायनेषु जालमार्गाः वायुप्रवेशाय क्षुद्र-क्षुद्र-पथाः, न तु लोकेषु जालमार्गाः कूटकल्पनापद्धतयः, सर्वेषामेव सत्स्वभावत्वात्। शशिनि कलङ्कः स्वाभाविकः, कृपाणकवचयोस्तु बहुकालव्यवहाराभावे मालिन्यरूपो कलङ्कौ, न तु लोकचरित्रेषु कलङ्का अपवादाः, सच्चरित्रत्वात्। रति-कलहेषु रमणविषयकविवादेषु दूतसम्प्रेषणानि, न तु समरेषु, तदभावात्। सार्य्यक्षेषु गुटिकाक्षेत्रेषु शून्य-गृहा गुटिकाशून्यकोष्ठानि, न तु ग्रामेषु जनशून्यगृहाः, सर्वविधोत्पीड़नाभावादिति भावः।

अत्र चतुर्द्दशानां श्लेषानुप्राणितार्थपरिसंख्यालङ्काराणां परस्परनैरपेक्ष्यात् संसृष्टिः।

---

(ম) যে রাজা ভূমণ্ডল জয় করিয়া পরিপালন করিতে লাগিলে প্রজাদিগের চিত্র-কার্য্যেই বর্ণসঙ্কর (নীলপীতাদিবর্ণের সংমিশ্রণ) ছিল, কিন্তু সমাজে বর্ণসঙ্কর ছিল না; সম্ভোগের বেলায়ই কেশধারণ ছিল, কিন্তু যুদ্ধে কেশাকর্ষণ ছিল না; কাব্যেতেই দৃঢ় বন্ধন (প্রগাঢ় রচনা) ছিল, কিন্তু কারাগারে দৃঢ়-বন্ধন ছিল না; শাস্ত্রেই চিন্তা ছিল, কিন্তু উদরান্নপ্রভৃতির চিন্তা ছিল না; স্বপ্নের বেলায়ই প্রতারণা হইত, কিন্তু অন্য সময়ে নহে; ছত্রেই সুবর্ণদণ্ড ছিল, কিন্তু কাহারও অর্থ-দণ্ড ছিল না; পতাকা কম্পিত হইত, কিন্তু লোকের মন কম্পিত হইত না; গানেই বসন্তপ্রভৃতি রাগ ব্যবহার হইত, কিন্তু কাহারও প্রতি কেহ রাগ (বিদ্বেষাচরণ) করিত না; হস্তীতেই মদ-বিকার ছিল, কিন্তু কাহারও চিত্তে ছিল না; ধনুতেই গুণচ্ছেদ হইত, কিন্তু লোকের দয়া-দাক্ষিণ্য প্রভৃতি গুণের লোপ হইত না; বাতায়নেই জালরন্ধ্র ছিল, কিন্তু অন্যত্র জালরন্ধ্র (প্রতারণা-পদ্ধতি) ছিল না; চন্দ্র, তরবারি ও লৌহবর্ম্মেই কলঙ্ক ছিল, কিন্তু কাহারও চরিত্রে কলঙ্ক ছিল না, দম্পতীর প্রণয়-কলহেই দূত পাঠান হইত, কিন্তু যুদ্ধের জন্য দূত পাঠান হইত না; আর দাবা পাশাপ্রভৃতির কোঠেই শূন্যগৃহ থাকিত, কিন্তু গ্রামে শূন্যগৃহ থাকিত না।

---

(১) দূতপ্রেষণানি।

यस्य च परलोकाद्भयम्, अन्तःपुरिकालकेषु भङ्गः, नूपुरेषु मुखरता, विवाहेषु करपीडनम्, अनवरतमखाग्निधूमेनाश्रुपातः, तुरगेषु (१) कशाभिघातः, मकरध्वजे चापध्वनिरभूत् (२)। (य)

तस्य च राज्ञः कलिकालभय-पुञ्जीभूत-कृतयुगानुकारिणी (३) त्रिभुवन-प्रसवभूमिरिव विस्तीर्णा मज्जन्मालवविलासिनीकुचतटास्फालन-जर्जरितोर्म्मि-मालया जलावगाहनावतारित (४)-जयकुञ्जरकुम्भ-सिन्दूर-सन्ध्यायमान-सलिलया

---

(य) यस्य चेति। यस्य च शूद्रकस्य परलोकात् जन्मान्तरात् भयं, न तु शत्रुतः, तस्मादात्मनः प्रबलत्वात्। अभूदिति वक्ष्यमाणक्रियया सर्वत्रान्वयः। अन्तःपुरिकाणां अन्तःपुरवासिनीनां स्त्रीणां अलकेषु चूर्णकुन्तलेषु भङ्गो वक्रता, न तु युद्धेषु भङ्गः पराजयः, दुर्द्धर्षसैन्यशालित्वात्। नूपुरेषु मुखरता शब्दायमानता, न तु जनेषु मुखरता वाचालता सर्वेषामेव प्रियभाषित्वात्। विवाहेषु करपीडनं पाणिग्रहणं न तु लोकेषु करो राजग्राह्यद्रव्यं तेन पीडनं तदादानाय यातनाकरणं लोकानां सम्पन्नत्वेन यथासमय एव तत्प्रदानात् राज्ञश्च अवस्थानुसारेण व्यवस्थापनात्। अनवरतेन अविरतेन मखाग्निधूमेन यज्ञवह्निधूमेन अश्रुपातः नयनजलनिःसरणं न तु शोकादिना, अकालमरणाद्यभावात्। तुरगेषु अश्वेषु कशाभिघातः न तु चौरादिषु तदभावात्। मकरध्वजे मदने चापध्वनिः लोकमनोमोहनाय धनुष्टङ्कारः, न तु सैन्यजने, प्रायेण युद्धाभावादिति भावः।

अत्रापि सर्वत्रार्थपरिसंख्यालङ्कारः, किञ्च मकरध्वजे चापध्वनिरित्यत्र मकरध्वजचापध्वनेरसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरित्येतेषां मिथोनिरपेक्षतया संसृष्टिः।

(र) तस्येति। तस्य च राज्ञः शूद्रकस्य विदिशाभिधाना राजधान्यासीदिति सम्बन्धः। कलीत्यादि प्रथमान्तं विदिशायाः विशेषणं, तृतीयान्तत्रयञ्च वेत्रवत्या विशेषणं। कलिकालभयेन कलियुगस्थपापभयेन पुञ्जीभूतं अवयवसङ्कोचेन सङ्कुचितमिव यत् कृतयुगं सत्ययुगं तदनुकर्त्तुं शीलं यस्याः सा। एतेन महापुण्यभूमित्वं सूचितं। त्रिभुवनस्य त्रिजगतः प्रसवभूमिरिव उत्पत्तिस्थानमिव विस्तीर्णा विशाला। मज्जन्तीनां स्नानाय अवगाहमानानां मालवविलासिनीनां मालवदेशीयरमणीनां कुचतटास्फालनेन गुरुतरस्तनान्दोलनेन जर्जरिता चूर्णीकृता ऊर्म्मिमाला तरङ्गावली यस्यास्तया। जलावगाहनाय अवतारितानां रक्षकैः प्रवेशितानां

---

(य) যে রাজার রাজ্যে কেবল পরলোক হইতেই ভয়, অন্তঃপুরবাসিনী রমণীগণের কেশকলাপেই বক্রতা, নূপুরেই মুখরতা, বিবাহেই করপীড়ন, অবিরত যজ্ঞাগ্নিধূমদ্বারাই অশ্রুপাত, অশ্বেতেই কশাঘাত এবং কামদেবেরই কার্ম্মুকধ্বনি হইত।

(র) কলিযুগের ভয়ে সঙ্কুচিত সত্যযুগের অনুকারিণী এবং ত্রিভুবনের প্রসবকারিণী ভূমির ন্যায় বিস্তৃত বিদিশানামে নগরী, সেই মহারাজ শূদ্রকের রাজধানী ছিল; তাহার চতুর্দ্দিকে বেত্রবতী নদী প্রবাহিত হইত; অবগাহনের সময় মালবদেশীয় রমণীগণের স্তনতটের আস্ফালনে

---

(१) तुरङ्गेषु। (२) उदभूत्। (३) अनुसारिणी। (४)...वायात, वागत...।

उन्मद-कलहंस-कुल-कोलाहल-मुखरित(१)-कूलया वेत्रवत्या(२)परिगता विदिशा-(३)-भिधाना नगरी राजधान्यासीत् । (ख)

स तस्याञ्च विजिताशेष-(४) भुवनमण्डलतया विगतराज्यचिन्ताभारनिर्वृतः, द्वीपान्तरागतानेक-भूमिपाल-मौलिमाला-लालित-चरणयुगलो, वलयमिव लीलया भुजेन भुवनभारमुद्वहन्, अमरगुरुमपि प्रज्ञयोपहसद्भिरनेककुलक्रमागतैरसकृदालोचित-नीतिशास्त्र-निर्मल-मनोभिरलुब्धैः स्निग्धैः प्रबुद्धैरमात्यैः परिवृतः, समानवयोविद्यालङ्कारैरनेकमूर्द्धाभिषिक्तपार्थिवकुलोद्गतैरखिल-कलाकलापालोचन-कठोरमतिभिरतिप्रगल्भैः कालविद्भिः प्रेमानुरक्तहृदयैरग्राम्यपरिहासकुशलैरिङ्गिताकारवेदिभिः काव्य-नाटकाख्यानकाख्यायिकालेख्यव्याख्यानादिक्रिया-

जयकुञ्जराणां विपक्षविजयहेतुभूतहस्तिनां कुम्भसिन्दूरैः मस्तकार्पितसिन्दूरैः सन्ध्यायमानानि सन्ध्यावदाचरन्ति लोहितीभूतानि सलिलानि जलानि यस्याः तया। उन्मदानां अतीवामोदितानां कलहंसानां कुलस्य समूहस्य कोलाहलेन अस्पष्टरवेण मुखरितं शब्दायमानीकृतं कूलं पुलिनं यस्याः तया। वेत्रवत्या तदाख्यया नद्या परिगता परिवेष्टिता।

अत्र प्रथमे विशेषणे पुञ्जीभूतत्वोत्प्रेक्षा आर्थी उपमा च, द्वितीये द्रव्योत्प्रेक्षा, कुचतटास्फालनेन ऊर्मिमालाया जर्जरितत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, सन्ध्यायमानेति क्यङ्गतोपमा चेत्येतेषां मिथो नैरपेक्ष्यात् संसृष्टिः। •

(ख) स इति। स राजा तस्यां विदिशायां सुखमतिचिरमुवासेत्यन्वयः। अत्र प्रथमान्तपदानि राजविशेषणानि, तृतीयान्तपदानि च अमात्यानां राजपुत्राणाञ्च विशेषणानि। विगतो यो राज्यचिन्ताभार स्तेन निर्वृतः सुस्थचित्तः। द्वीपान्तरेभ्य आगतानां अनेकभूमिपालानां बहुतरनृपतीनां मौलिमालया शिरःश्रेण्या लालितं आदरेण संस्पृष्टं चरणयुगलं यस्य सः। वलयं कटकमिव लीलया अनायासेन। प्रज्ञया बुद्ध्या अमरगुरुं बृहस्पतिं। अनेककुलक्रमागतैः वंशपरम्परया अमात्यपदारूढैः। असकृदालोचितैः बहुवारानुशीलितैः नीतिशास्त्रैः निर्म्मलानि मनांसि येषां तैः। अलुब्धैः लोभरहितैः, अन्यथा उत्कोचग्रहणादिना

বেত্রবতীর তরঙ্গশ্রেণী চূর্ণ হইয়া যাইত; রক্ষকগণ স্নান করাইবার জন্য হস্তিগণকে নামাইয়া দিলে তাহাদের মস্তকের সিন্দূর ছড়াইয়া পড়ায় বেত্রবতীর জল, সন্ধ্যাকালের ন্যায় রক্তবর্ণ হইত আর নিতান্ত আমোদিত কলহংসগণের কোলাহলে পুলিনভাগ মুখরিত হইত।

(খ) সমগ্র ভূমণ্ডল আয়ত্ত থাকাবশতঃ রাজ্যচিন্তার ভার দূরীভূত হওয়ায় মহারাজ শূদ্রক, সুস্থচিত্ত হইয়া নিজভুজে বলয়ের ন্যায় অনায়াসে জগতের ভার বহন করত, সেই বিদিশা রাজধানীতে বহুকাল যাবৎ সুখে বাস করিয়াছিলেন। সেই সময়ে অন্যান্য দ্বীপ হইতে আগত অনেক রাজা, মস্তক দ্বারা আদরে তাঁহার চরণ স্পর্শ করিতেন; বুদ্ধিবলে বৃহস্পতির তুল্য, অনবরত নীতিশাস্ত্রপর্য্যালোচনায় নির্ম্মলচেতা, লোভশূন্য, অনুরক্ত ও সকল কার্য্যে সতর্ক—

(१) मुखरीकृत। (२) वेत्रवत्या सत्या, वेत्रवत्या। (३) नन्दिता···। (४) स तस्यामवजिताशेष:...।

निपुणैरति-कठिन-पोवर-स्कन्धोरु बाहुभिरसकृदवदलितसमद-रिपु-गज-घटा-पीठबन्धैः केशरि-किशोरकैरिव, विक्रमैकरसैरपि विनयव्यवहारिभिरात्मनः प्रतिबिम्बैरिव राजपुत्रैः सह रममाणः प्रथमे वयसि सुखमतिचिरमुवास। (ख)

तस्य चातिविजिगीषुतया महासत्त्वतया च तृणमिव लघुवृत्ति स्त्रैणमाकलयतः प्रथमे वयसि वर्त्तमानस्यापि रूपवतोऽपि (१) सन्तानार्थिभिरमात्यैरपेक्षितस्यापि सुरतसुखस्योपरि द्वेष इवासीत्। (ग)

---

राज्ञः क्षतिमपि कुर्य्युरिति भावः। स्निग्धैरनुरक्तैः, प्रबुद्धैः जागरितैः कार्य्येषु सतर्कैः। अनेकेषां मूर्द्धाभिषिक्तानां ब्राह्मणेभ्यः क्षत्रियासु जाता मूर्द्धाभिषिक्ता स्तेषां, पार्थिवानां राज्ञाञ्च कुलेभ्य उद्गता उत्पन्ना स्तैः, अखिलानां सर्वासां कलानां नृत्यगीतादिकलाविद्यानां कलापस्य समूहस्य आलोचनेन अनुशीलनेन कठोराः परिणता मतयो बुद्धयो येषां तैः। अतिप्रगल्भैः नितान्तचतुरैः, कालविद्भिः अवसरज्ञैः। प्रणयानुरक्तैः अनङ्गीलेषु परिहासेषु कुशलैः निपुणैः। इङ्गितं चित्तगतभावः,आकारः भ्रू-नेत्रादिसङ्कोचादिरूपो भङ्गीविशेषः तौ विदन्तीति तैः। काव्यं पद्यमयमहावाक्यं रसात्मकं वाक्यं वा, नाटकं रूपकविशेषः, आख्यानकानि चूर्णकानि, आख्यायिका गद्यकाव्यविशेषः, आलेख्यं चित्रनिर्म्माणं, व्याख्यानं अर्थविशदीकरणं तदादयो याः क्रिया तासु निपुणैः दक्षैः। अतिकठिना नितान्तदृढ़ाः पीवराः स्थूलाश्च स्कन्धोरुबाहवो येषां तैः। असकृत् अवदलिता विमर्द्दिताः समदानां मत्तानां रिपुगजघटानां विपक्षहस्तिसमूहानां पीठबन्धाः पृष्ठस्थितासनानि यैस्तैः। केशरिकिशोरैः सिंहशिशुभिरिव, विक्रमे महासामर्थ्ये एको मुख्यः रस आसक्ति येषां तैस्तथाविधैरपि। आत्मनः स्वस्य प्रतिबिम्बैरिव एतेनातिसादृश्यं सूचितम्।

अत्र वलयमिवेत्युपमा, अमरगुरुमपि प्रज्ञयोपहसद्भिरित्यनेनाप्यार्थोपमा आक्षिप्यते, केशरिकिशोरकैरिवेत्युपमा प्रतिबिम्बैरिवेत्युपमा च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः।

(ग) तस्येति। अतिविजिगीषुतया वीरत्वे परमोत्कर्षलाभेच्छया, महासत्त्वतया नितान्ताध्यवसायशालितया च। लघ्वी विशेषोन्नतिसाधकत्वाभावात् तुच्छा वृत्ति र्गर्हकर्म्मवेशविन्यासादिव्यवहारो यस्य तत्, असारमित्यर्थः, स्त्रैणं स्त्रीसमूहं आकलयतो निर्द्धारयतः। प्रथमे वयसि वर्त्तमानस्यापि नवयुवकस्यापि,

---

এইরূপ. কুলক্রমাগত মন্ত্রিগণ তাঁহাকে পরিবেষ্টন করিয়া থাকিতেন। আর মূর্দ্ধাভিষিক্ত ও রাজবংশে উৎপন্ন, সমস্ত কলাবিদ্যার আলোচনায় পরিপক্কবুদ্ধি, সুচতুর, অবসরজ্ঞ, প্রণয়ানুরক্ত, অশ্লীলতাশূন্যপরিহাসে নিপুণ, অভিপ্রায় ও অঙ্গভঙ্গিবিশেষজ্ঞ, কাব্য, নাটক, আখ্যানক, আখ্যায়িকা, চিত্রবিদ্যা ও ব্যাখ্যাপ্রভৃতি কার্য্যে নিপুণ, কঠিন ও স্থূল স্কন্ধ, উরু ও বাহুশালী, বহুযুদ্ধে বিপক্ষদিগের মত্তহস্তিবিজয়ী, সিংহশাবকের ন্যায় মহাপরাক্রমশালী অথচ বিনয়ব্যবহারী এবং সমবয়স্ক, সমান বিদ্বান্ ও সমান ভূষণে ভূষিত, আপনার প্রতিবিম্বতুল্য রাজপুত্রগণের সহিত মহারাজ শূদ্রক, প্রথম বয়সে আমোদপ্রমোদ করিতেন।

(গ) অতিশয় বিজিগীষু ও নিতান্ত অধ্যবসায়শীল বলিয়া মহারাজ শূদ্রক, স্ত্রীদিগকে

---

(१) वर्त्तमानस्यातिरूपवतोऽपि।

सत्यपि रूपविलासोपहसित-रतिविभ्रमे लावण्यवति विनयवत्यन्वयवति (१) हृदयहारिणि चावरोधजने, स कदाचिदनवरतदोलायमान-रत्नवलयो घर्घरिकास्फालन-प्रकम्पमान-झणझणायमान-मणिकर्णपूरः स्वयमारब्धमृदङ्ग-वाद्यः सङ्गीतकप्रसङ्गेन, कदाचिदविरल-विमुक्त-शरासार-शून्यीकृतकाननो मृगयाव्यापारेण, कदाचिदाबद्ध-विदग्धमण्डलः काव्यप्रबन्धरचनेन, कदाचि-च्छास्त्रालापेन, कदाचिदाख्यानकाख्यायिकेतिहास-पुराणाकर्णनेन, कदाचिदा-

---

रूपवतोऽपि परमसुन्दरस्यापि, तस्य शूद्रकस्य। अपेक्षितस्य आकाङ्क्षितस्यापि। द्वेष इवासीत्। एतेन तस्य सुरतसुखे स्वतो निवृत्तिरासीदिति सूचितम्।

अत्र द्वेषकारणाभावेऽपि तदुत्पत्तेः किं विभावना, किंवा सत्स्वपि सुरतकारणेषु यौवनादिषु तदनुत्पत्ते र्विशेषोक्ति रित्युभयोः सन्देहसङ्करः, स पुन स्तृणमिवेत्युपमया च सङ्कीर्य्यते।

(श) सुरतसुखविद्वेषं प्रदर्शयितुं अन्यविधकार्य्यासक्तिं दर्शयति सत्यपीति। रूपं सौन्दर्य्यं विलासो भ्रूनेत्रादिक्रियाविशेषः, ताभ्यां उपहसितो न्यूनतया निन्दितः, रते र्मदनवनिताया विभ्रमो विलासो येन तस्मिन् विनयवति पत्यावागते आसनत्यागादिना नम्रताशालिनि, अन्वयो वंशोऽस्त्यस्तीति तस्मिन्, प्रशंसायां वतुः सद्वंशजात इत्यर्थः, हृदयहारिणि मनोहरे अवरोधजने भार्य्यावर्गे सत्यपि। स शूद्रकः दिवसमनैषीदिति वक्ष्यमाणक्रिययान्वयः। प्रथमान्तानि शूद्रकविशेषणानि, तृतीयान्तानि दिवसनयनक्रियाकरणानि। अनवरतं दोलायमाने वादने करकम्पनात् स्पन्दमाने रत्नवलये करद्वयस्थितं रत्नमयकटकयुगलं यस्य सः, तथा घर्घरिकाया वाद्यविशेषस्य वीणायाः आस्फालनेन पाणिना ताड़नेन यः प्रकम्पो देहकम्पनान्मस्तककम्पनं तेन झणझणायमानौ 'झण झण' इत्थं शब्दं कुर्वाणौ मणिकर्णपूरौ मणिमयकर्णालङ्कारौ यस्य सः। अविरलं घनं यथा स्यात्तथा विमुक्तानां निक्षिप्तानां शराणां बाणानां आसारेण धारासम्पातेन शून्यीकृतं हिंस्रपशुरहितीकृतं काननं वनं येन सः। आबद्धं विहितं विदग्धमण्डलं पण्डितसभा येन सः। आलेख्यविनोदेन चित्रनिर्म्माण-तद्दर्शनामोदेन।

---

তৃণের ন্যায় অসার মনে করিতেন; আর নব যুবক এবং পরম সুন্দর হইলেও এবং তাঁহার সন্তানার্থী মন্ত্রীদিগের ইচ্ছা সত্ত্বেও স্ত্রীসম্ভোগসুখের উপর তাঁহার যেন বিদ্বেষ ছিল।

(শ) রূপ ও ভাবভঙ্গীতে কামভার্য্যা রতি হইতেও উৎকৃষ্ট, লাবণ্য ও বিনয়সম্পন্ন, সদ্বংশজাত ও মনোহর—এইরূপ রমণীগণ থাকিলেও, মহারাজ শূদ্রক, কখনও দিনের বেলায় আপনিই মৃদঙ্গ বাজাইতে আরম্ভ করিয়া সঙ্গীত-চর্চ্চায় সময় অতিবাহিত করিতেন;) তখন তাঁহার হস্তদ্বয়ের রত্নময় বলয়যুগল আন্দোলিত হইতে থাকিত; বীণা বাজাইবার সময় মস্তক কম্পিত করায় মণিময় কর্ণালঙ্কার ঝণ ঝণ করিয়া উঠিত; কখনও অনবরত বাণবৃষ্টিতে বনভূমি হিংস্রজন্তু-শূন্য করিয়া সময়ক্ষেপ করিতেন; কোন সময়ে পণ্ডিতসভা আহ্বান করিয়া কাব্য ও প্রবন্ধ রচনায় কাল কাটাইতেন; কখনও শাস্ত্রালাপে, কোন সময়ে ছোট গল্প, বাসবদত্তা

---

(१) अन्वयवत्यभिजनवति।

लेख्यविनोदेन, कदाचिद्वीणया, कदाचिद्दर्शनागत-मुनिजन-चरणशुश्रूषया, कदा-चिदक्षरच्युतक-मात्राच्युतक-विन्दुमती-गूढ़चतुर्थपाद-प्रहेलिका-प्रदानादिभिः, वनिता-सम्भोगसुख-पराङ्मुखः सुहृत्परिवृतो दिवसमनैषीत् (१)। (ग)

यथैव च दिवसमेवमारब्ध-विविध-क्रीड़ा-परिहास-चतुरैः (२) सुहृद्भिरुपेतो निशामनैषीत्। (घ)

---

वीणया वीणावाद्यश्रवणेन। अक्षरस्य वर्णस्य च्युतं च्युतिर्यत्र तदक्षरच्युतकं काव्यं। यथा—"कुर्वन् दिवाकरा-श्लेषं दधच्चरणडम्बरम्। देव! यौष्माकसेनायाः करेणुः प्रसरत्यसौ।" इत्यत्र करेणुपदस्य ककारच्युतौ रेणुप्रतीतिः। मात्राच्युतकं काव्यं यथा—"मूलस्थितिमधः कुर्वन् पात्रैर्जुष्टो गताश्रैः। विटः सेव्यः कुलीनस्य तिष्ठतः पथिकस्य सः।" अत्र विटपदस्य इकारमात्राच्युतौ वटतरुप्रतीतिः। पद्यवर्णसंख्यया केवलविन्दुनिवेशनेन तत्तद्वर्णोपलब्धि र्विन्दुमती। यथा—ि ० ० ० ० f ० ० ी ० ॖ : : f ० ० । ० ० ॖ ० ॖ : ० । । ० ० ी : । ० : ० । ० ० ॖ f ० ० ॖ ० : ० । ० f ० : ० ।" एतत्पद्यं यथा माघे—"विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा। अनीत्वा पङ्कतां धूलि मुदकं नावतिष्ठते।" यत्र प्रथमद्वितीयतृतीयपादेषु चतुर्थ-पादस्य वर्णा गुप्तास्तिष्ठन्ति स गूढ़चतुर्थपादः। श्लोको यथा—"न मज्जति क्वचिद्दोषे प्रीणाति जगतो मनः। य एकः स परं श्रीमान् चिरं जयति सज्जनः।" अत्र 'चिरं जयति सज्जनः' इति चतुर्थपादः प्रथमपादत्रयेषु गुप्तः। विदग्धमुखमण्डने प्रहेलिकालक्षणं यथा—"व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात्। यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका।" सा च द्विविधा शाब्दी आर्थी च। तत्र शाब्दी यथा—

"सदारिमध्यापि न वैरियुक्ता नितान्तरक्ताप्यसितैव नित्यम्।
यथोक्तवादिन्यपि नैव दूती का नाम कान्तेति निवेदयाशु॥"

अत्र 'सारिका' इत्युत्तरम्। आर्थी यथा—

"नरनारीसमुत्पन्ना सा स्त्री देहविवर्जिता। अमुखी कुरुते शब्दं जातमात्रा विनश्यति।' अत्र 'छोटिका' इत्युत्तरम्। तस्याः प्रहेलिकायाः प्रदानादिभि र्जिज्ञासाप्रभृतिभिः।

(घ) यथैवेति। यथैव दिवसमनैषीत् एवं तथा, निशामप्यनैषीदित्यन्वयः। आरब्धेषु प्रवर्त्तितेषु, विविधेषु नानाप्रकारेषु क्रीड़ापरिहासेषु खेलोपहासेषु चतुरैर्दक्षैः। अतएव सुरतसुखस्योपरि द्वेष इवासीदिति भावः।

---

প্রভৃতি বিস্তৃত কথা, ইতিহাস ও পুরাণ-শ্রবণে, কখনও চিত্রনির্ম্মাণ ও চিত্রদর্শনের আমোদে, কখনও বীণা-শ্রবণে, কখনও সাক্ষাৎ করিবার জন্য উপস্থিত মুনিগণের পদসেবায়, কখনও বা অক্ষরচ্যুতক, মাত্রাচ্যুতক বিন্দুমতী ও গূঢ়চতুর্থপাদের আলোচনায় এবং প্রহেলিকা জিজ্ঞাসা করিয়া, স্ত্রীসম্ভোগসুখ হইতে নিবৃত্ত হইয়া সুহৃৎসমূহে পরিবৃত থাকিয়া দিনের বেলা সময় অতিবাহিত করিতেন।

(ঘ) মহারাজ শূদ্রক যে ভাবে দিন অতিবাহিত করিতেন, সেই ভাবে নানাবিধ খেলা ও পরিহাসে নিপুণ সুহৃদ্‌গণের সহিত মিলিত হইয়া রাত্রি অতিবাহিত করিতেন।

---

(१) अनयत्। (२) चतुरः।

एकदा तु नातिदूरोदिते नव-नलिन-दल-सम्पुट-भिदि किञ्चिन्मुक्त-(१) पाटलिम्नि भगवति मरीचि-(२) मालिनि, राजानमास्थानमण्डपगतमङ्गना-जनविरुद्धेन वामपार्श्वावलम्बिना कौक्षेयकेण सन्निहितविषधरेव चन्दनलता भीषणरमणीयाकृतिः, अविरलचन्दनानुलेपन-(३) धवलित-स्तनतटा उन्मज्जदैरा-वतकुम्भमण्डलेव मन्दाकिनी, चूड़ामणिसंक्रान्तप्रतिबिम्बच्छलेन (४) राजाज्ञेव मूर्त्तिमती राजभिः शिरोभिरुह्यमाना, शरदिव कलहंसधवलाम्बरा,

---

(स) एकदेति। एकदा प्रतीहारी द्वारे नियुक्ता स्त्री समुपसृत्य आस्थानमण्डपगतं सभामण्डपस्थितं राजानं सविनयमब्रवीदित्यन्वयः। अत्र प्रथमान्तपदानि प्रतीहारीविशेषणानि। नवनलिनदलानां नूतनपद्मपत्राणां सम्पुटं सङ्कोचभावं भिनत्ति दूरीकरोति पद्ममुकुलं प्रकाशयतीत्यर्थः यः स तस्मिन्, किञ्चिन्मुक्तः किञ्चिद् दूरोदयात् ईषत् परित्यक्तः पाटलिमा श्वेतरक्तता येन तस्मिन्, भगवति माहात्म्यशालिनि, मरीचिमाला अस्यास्तीति तस्मिन् सूर्य्ये नातिदूरोदिते गगनस्य किञ्चिद् दूरोदिते सति। अङ्गनाजनविरुद्धेन समरोपकरणत्वात् स्त्रीलोकव्यवहार-प्रतिकूलेन। कौक्षेयकेण असिना। अयन्तु भीषणत्वे हेतुः। सन्निहितः पार्श्वस्थितः विषधरः सर्पो यस्याः सा चन्दनलतेव, भीषणा च स्वभावतो रमणीया च आकृतिरस्याः सा। अत्र पूर्णोपमालङ्कारः।

अविरलस्य घनस्य चन्दनस्यानुलेपनेन धवलितं शुभ्रीकृतं स्तनतटं यस्याः सा, अतएव उन्मज्जत् जलप्रवेशे प्रवर्त्तमानं ऐरावतस्य श्वेतवर्णस्येन्द्रहस्तिनः कुम्भमण्डलं मस्तकस्थमांसपिण्डौ यस्यां सा, मन्दाकिनी श्वेतजला स्वर्गगङ्गेव। अत्रोपमालङ्कारः।

चूड़ामणिषु उपस्थितनृपतीनां किरीटरत्नेषु संक्रान्तं पतितं यत् प्रतिबिम्बं प्रतीहार्य्याः प्रतिमूर्त्तिः तस्य च्छलेन, राजभिरुपस्थितसामन्तनृपतिभिः, शिरोभिरुह्यमाना मस्तकैर्ध्रियमाणा मूर्त्तिमती, राज्ञः शूद्रकस्य आज्ञेव। अत्र सापह्नवोत्प्रेक्षालङ्कारः।

कलहंसवत् धवलं अम्बरं आकाशं यस्यां सा, अन्यत्र अम्बरं वसनं यस्याः सा। अत्र पूर्णोपमालङ्कारः।

---

(অ) একদিন, নূতন কমলকলিকা-প্রকাশকারী ভগবান্ সূর্য্যদেব, কিয়ৎপরিমাণে পাটল-বর্ণ পরিত্যাগ করিয়া আকাশের কিছু দূরে উঠিলে, প্রতীহারী আসিয়া সভামণ্ডপস্থিত রাজা শূদ্রকের নিকট উপস্থিত হইল; তখন স্ত্রীলোকবিরুদ্ধ তরবারি তাহার বামপার্শ্বে ঝুলান থাকায় তাহাকে বিষধরধারিণী চন্দনলতার ন্যায় ভীষণ ও রমণীয়মূর্ত্তি দেখা যাইতেছিল; ঘন চন্দনের অনুলেপনে তাহার স্তনদেশ শুভ্রবর্ণ ছিল, সুতরাং ঐরাবত হস্তীর কুম্ভমণ্ডল জলে নিমগ্ন হইতে লাগিলে মন্দাকিনীর ন্যায় সে শোভা পাইতেছিল; উপস্থিত রাজগণের মুকুট-মণিতে প্রতীহারীর প্রতিমূর্ত্তি পতিত হইয়াছিল, সুতরাং সেই ছলে রাজগণ, যেন মূর্ত্তিমতী রাজাজ্ঞা মস্তকে বহন করিতেছিলেন; শরৎকাল যেমন কলহংসতুল্য নির্ম্মল আকাশদ্বারা পরি-

---

(१) उन्मुक्त...। (२) सहस्रमरीचि...। (३) मलयजानुलेपन, चन्दनानुलेप...।
(४) चूड़ामणिप्रतिबिम्ब ...।

जामदग्न्यपरशुधारेव वशीकृतसकलराजमण्डला, विन्ध्यवनभूमिरिव वेत्रलतावती, राज्याधिदेवतेव विग्रहिणी, प्रतीहारी समुपसृत्य (१) क्षितितल-निहित-जानु-करकमला (२) सविनयमब्रवीत्—(ख)

—"देव ! द्वारस्थिता (३) सुरलोकमारोढुकामस्य त्रिशङ्कोरिव कुपितशतमख-हुङ्कार-निपातिता (४) राजलक्ष्मीर्दक्षिणापथादागता चण्डाल-(५) कन्यका (६) पञ्जरस्थं शुकमादाय देवं विज्ञापयति—'सकल-भुवनतल-सर्वरत्नाना (७) मुदधिरिवैकभाजनं देवः, विहङ्गमश्चायमाश्चर्य्यभूतो (८) निखिल-भुवनतल-

जामदग्न्यस्य परशुरामस्य परशुधारेव कुठारनिशितांश इव, वशीकृतं आयत्तीकृतं अन्यत्र दर्शनेनाकृष्टं सकलं राजमण्डलं यया सा। अत्र पूर्णोपमालङ्कारः।

वेत्रलतावती वेतसवल्लीयुक्ता, अन्यत्र वेत्रहस्ता। अत्रापि पूर्णोपमा।

विग्रहिणी मूर्त्तिमती राज्याधिदेवतेव। अत्र द्रव्योत्प्रेक्षालङ्कारः।

क्षितितले निहिते स्थापिते जानू, करकमले यया सा।

(ख) देवेति। सुरलोकं स्वर्गं। त्रिशङ्कोः सूर्य्यवंशीयराजविशेषस्य। कुपितस्य शतमखस्य इन्द्रस्य हुङ्कारेण निषेधव्यञ्जकध्वनिना निपातिता अधःक्षिप्ता राजलक्ष्मीरिव। अत्रोत्प्रेक्षालङ्कारः।

देवः स्वामी भवान्, प्रमाणं कर्त्तव्याकर्त्तव्यनिर्द्देशकर्त्तेत्यर्थः। विरराम प्रतीहारीत्यन्वयः।

पुरा त्रिशङ्कुर्नाम कश्चन सूर्य्यवंशीयो राजा यज्ञविशेषेण सशरीरः स्वर्गं यियासुः कुलगुरुणा वशिष्ठेन प्रत्याख्यातः। परन्तु तस्य पुत्रानुपगतस्तैरभिशप्तः 'यतस्त्वं गुरुं विहायास्मानुपगतस्ततस्त्वं चण्डालो भवेति।"

শোভিত হয়, প্রতীহারীও তেমন কলহংসের ন্যায় শ্বেতবসনদ্বারা শোভা পাইতেছিল ; পরশুরামের কুঠারের ধার যেমন ভয় জন্মাইয়া সমস্ত রাজগণকে বশীভূত করিয়াছিল, প্রতীহারীও তেমন কটাক্ষপাতে সভাস্থ রাজগণকে বশীভূত করিয়াছিল ; বিন্ধ্যকাননে যেমন বেত থাকে, তেমন প্রতীহারীর হাতেও একখানা বেত ছিল ; তখন প্রতীহারীকে মূর্ত্তিমতী রাজ্যের অধিষ্ঠাত্রী দেবীর ন্যায় দেখা যাইতেছিল। সেই প্রতীহারী, জানুযুগল ও করকমলদ্বয় ভূতলে সংস্থাপিত করিয়া সবিনয়ে বলিল—

—"দেব ! কুপিত দেবরাজের হুঙ্কারে অধঃপাতিতা, স্বর্গারোহণকারী রাজা ত্রিশঙ্কুর রাজলক্ষ্মীর ন্যায়, দাক্ষিণাত্য হইতে আগতা কোন চণ্ডালকন্যা পঞ্জরমধ্যে একটি শুক পক্ষী লইয়া দ্বারদেশে উপস্থিত হইয়া আপনাকে জানাইতেছে—'মহারাজ, সমুদ্রের ন্যায় সমগ্র ভূমণ্ডলের সমস্ত রত্নের একমাত্র আধার ; এই আশ্চর্য্য পাখীটিও সমস্ত জগতের মধ্যে

(१) समुपासृत्य। (२)···कमलं। (३) द्वारि स्थिता। (४) निपतिता। (५) चाण्डाल (६) काचित्। (७)···सर्वरत्नानां। (८) आश्चर्य्यभूतनिखिल...।

रत्नमिति ज्ञात्वा देवपादमूलमेन-(१) मादायागताहमिच्छामि देवदर्शनसुखमनुभवितुं, इति। एतदाकर्ण्य देवः प्रमाणमित्युक्त्वा विरराम। (ङ)

उपजातकुतूहलस्तु राजा समीपवर्त्तिनां राज्ञामवलोक्य (२) मुखानि "को दोषः, प्रवेश्यताम्" इत्यादिदेश। (च)

अथ प्रतीहारी नरपतिकथना-(३) नन्तरमुत्थाय तां मातङ्गकुमारीं प्रावेशयत्। (क)

प्रविश्य च सा नरपतिसहस्र-मध्यवर्त्तिनमशनिभय-पुञ्जित-कुलशैलमध्यगतमिव कनकशिखरिणम्, (ख) अनेक-रत्नाभरण-किरण-जालकान्तरितावयव-

ततस्तेन विश्वामित्रमुपेत्य स्वाभिप्राये विज्ञापिते विश्वामित्रो यज्ञं विधाय स्वर्गमारोढ़ुं तमुपदिदेश। त्रिशङ्कुस्तु यज्ञं विधाय स्वर्गमारोहन् गुरुत्यागात्तत्पुत्राणामभिशापेन चाण्डालभावापन्नत्वादयाज्यत्वाच्च देवराजेनाधःपातित इति रामायणवार्त्ता।

(च) उपजातेति। राज्ञां मुखावलोकनन्तु चाण्डालत्वेन तत्प्रवेशे तेषां वैमत्यमस्ति न वेत्यवगमार्थं, सति तु वैमत्ये नयनेङ्गितेनापि तत्प्रतिषेधसम्भवादिति भावः।

(क) अथेति। मातङ्गकुमारीं चाण्डालकन्याम्।

(ख) प्रविश्येति। सा चाण्डालकन्या प्रविश्य राजानमद्राक्षीदिति वक्ष्यमाणक्रिययान्वयः। अत्र सर्वाणि द्वितीयान्तपदानि राजविशेषणानि। अशनिभयेन इन्द्रवज्राघातात् पक्षच्छेदनभयेन पुञ्जितानां एकत्र मिलितानां कुलशैलानां पूर्वोक्तानां कुलपर्वतानां मध्यगतं कनकशिखरिणं सुमेरुपर्वतमिव। उपमा।

पुरा पक्षवन्तः पर्वताः पक्षिण इव देशाद्देशान्तरमुड्डीय पतन्तः दतनस्थानं चूर्णयामासुः। ततः सुरपतिरशनिना तेषां पक्षान् छेत्तुमारेभे, ते च तदा आत्मत्राणोपायोद्भावनाय एकत्र समवेता आसन्निति रामायणम्।

রত্নস্বরূপ– ইহা মনে করিয়া ইহাকে লইয়া মহারাজের চরণ-সমীপে উপস্থিত হইয়াছি, এখন মহারাজের দর্শন-সুখ অনুভব করিতে ইচ্ছা করি।' ইহা শুনিয়া আপনি যাহা আদেশ করেন" এই কথা বলিয়া প্রতীহারী বিরত হইল।

(চ) প্রতীহারীর বাক্যে রাজার কৌতুক জন্মিয়াছিল; সুতরাং তিনি নিকটবর্ত্তী রাজগণের মুখাবলোকন করিয়া প্রতীহারীকে আদেশ করিলেন, "দোষ কি, প্রবেশ করাও।"

(ক) তদনন্তর প্রতীহারী, রাজার আদেশের পর উঠিয়া সেই চাণ্ডালকন্যাকে প্রবেশ করাইল।

(খ) সেই চাণ্ডালকন্যা প্রবেশ করিয়া দেখিল যে, রাজা, চন্দ্রকান্ত-মণিনির্ম্মিত একখানি পর্য্যঙ্কের উপর উপবেশন করিয়া আছেন; বজ্রভয়ে একত্র সমবেত কুলপর্ব্বতগণের মধ্যবর্ত্তী সুমেরুর ন্যায় তিনি সামন্তরাজগণের মধ্যে অবস্থান করিতেছিলেন; নানাবিধ রত্নময় আভরণের

(१)...मूलमादाय...। (२) अवलोक्य। (३)...वचना...।

मिन्द्रायुध-सहस्र-संच्छादिताष्टदिग्विभागमिव जलधरदिवसम्, (१) (ग) अव-लम्बित-(२) स्थूल मुक्ताकलापस्य कनकशृङ्खला-नियमित-मणिदण्डिकाचतुष्टयस्य गगन-सिन्धु-फेनपटल पाण्डुरस्य (३) नातिमहतो दुकूलवितानस्याधस्तादिन्दु-कान्तमणि-(४) पर्य्यङ्किकानिषण्णम्, (घ) उद्धूयमान-कनक (५)-दण्ड-चामर-कलापम्, (ङ) उन्मयूख-मुख-कान्तिनिचय-पराभव-(६) प्रणते शशिनीव स्फटिकपादपीठे (७) विन्यस्तवामपादम्, (च) इन्द्रनीलमणि-कुट्टिम-प्रभा-

(ग) अनेकेति। अनेकेषां नानावर्णानां रत्नाभरणानां किरणजालकेन रश्मिसमूहेन अन्तरिता आच्छादिता अवयवा अङ्गानि यस्य तं, अतएव इन्द्रायुधसहस्रेण इन्द्रधनुःसमूहेन संछादिता आवृता अष्टौ दिग्विभागा यत्र तं, जलधरदिवसः मेघाच्छन्नदिनमिव स्थितम्। एतेन शूद्रकः श्यामवर्ण आसीदिति प्रतीयते। उपमा।

(घ) अवेति। अवलम्बिताः शिल्पिभिरधोलम्बित्वेन योजिताः स्थूलानां मुक्तानां कलापा श्रेण्यो यस्मिन् तस्य, एतानि षष्ठ्यन्तानि वितानविशेषणानि। कनकशृङ्खलाभिः स्वर्णनिर्म्मितशृङ्खलाभिः, नियमितं चतुर्षु कोणेषु बद्धं मणिदण्डिकाचतुष्टयं मणिमयक्षुद्रयष्टिचतुष्टयं यस्य तस्य। गगनसिन्धोर्मन्दाकिन्याः, फेनपटलवत् फेनसमूहवत् पाण्डुरस्य शुभ्रवर्णस्य। अत्र लुप्तोपमा। नातिमहतः किञ्चिद् हतः स्वल्पप्रमाणस्य, दुकूलवितानस्य पट्टवसननिर्म्मितचन्द्रातपस्य, अधस्तात् निम्नदेशे, इन्दुकान्तमणिपर्य्यङ्किका चन्द्रकान्तमणि-निर्म्मित-क्षुद्रपर्य्यङ्कः, तत्र निषण्णं उपविष्टं।

(ङ) उद्धूयमानः किङ्करैः सञ्चाल्यमानः कनकदण्डः चामरकलापो यस्य तम्।

(च) उन्मयूखेति। उद्गता मयूखाः किरणा यस्य तादृशस्य मुखस्य यः कान्तिनिचयः शोभासमूहः तेन यः पराभवः पराजयः तेन प्रणते चरणतले नम्रीभूते, शशिनि चन्द्र इव। अत्र द्रव्योत्प्रेक्षालङ्कारः।

কিরণজালে তাঁহার সমস্ত অঙ্গ আবৃত ছিল, তাহাতে, বহুতর ইন্দ্রধনুতে অষ্টদিক্ আচ্ছাদিত হইলে মেঘাচ্ছন্ন দিবসের ন্যায় তাঁহাকে দেখা যাইতেছিল; মন্দাকিনীর ফেন-সমূহের ন্যায় শ্বেতবর্ণ অনতিবৃহৎ পট্টবসননির্ম্মিত একখানি চন্দ্রাতপ উপরে খাটান ছিল; তাহাতে বড় বড় মুক্তার মালা ঝুলান ছিল, এবং তাহার চারি কোণে চারিটি মণিময়দণ্ড স্বর্ণশৃঙ্খলে বদ্ধ ছিল; স্বর্ণময়-দণ্ড সম্পন্ন চামরসমূহ আন্দোলিত হইতেছিল; যে স্ফটিকময় পাদপীঠে মহারাজ শূদ্রক বামচরণ বিন্যস্ত করিয়াছিলেন, সেই স্ফটিকময় পাদপীঠখানাকে, মুখের ঊর্দ্ধগামী কান্তিসমূহে পরাজিত হইয়া চন্দ্র যেন চরণতলে প্রণত হইয়া রহিয়াছেন বলিয়া বোধ হইতে ছিল; সে সময়ে তিনি চরণের নখসমূহের কিরণজালে শোভা পাইতেছিলেন, সেই কিরণগুলি নীলকান্তমণিনির্ম্মিত আসন-বেদিকার প্রভার সহিত মিশ্রিত হওয়ায় শ্যামবর্ণ হইয়াছিল, সুতরাং

(१) जलधरसमयदिवसं। (२) आलम्बित...। (३) पाण्डरस्य। (४) इन्दुकान्तपर्य्यङ्किका...। (५) सुवर्णदण्ड...। (६) उन्मयूखकान्तिनिचयपराभवप्रणते, उन्मयूखमुखविजयपराभवप्रणते, उन्मयूख-मुखकान्तिविजिते पराभवप्रणते। (७) स्फाटिके पादपीठे।

सम्पर्क-श्यामायमानैः प्रणत-रिपु-निश्वास-(१) मलिनीकृतैरिव चरण-नख-मयूखजालैरुपशोभमानम्, (छ) आसनोल्लसित पद्मराग-किरण-पाटलीकृतेना-चिर मृदित-(२) मधु-कैटभ-रुधिरारुणेन हरिमिवोरुयुगलेन विराजमानम्, (ज) अमृतफेन-धवले गोरोचना-लिखित-हंस-मिथुन-सनाथ-पर्य्यन्ते चामर-पवन-प्रनर्त्ति-तान्तदेशे (३) दुकूले वसानम्, (झ) अति-सुरभि-चन्दनानुलेपन-धवलितोरः-

(छ) इन्द्रेति। इन्द्रनीलमणीनां नीलकान्तमणीनां यः कुट्टिमः वेदिका, तस्य प्रभासम्पर्केण दीप्ति-मिश्रणेन श्यामायमानैः श्यामवदाचरद्भिः श्यामीभूतैः। अत्र कर्त्तृगतोपमालङ्कारः। अतएव प्रणतानां पराजयेन वशीभूतानां रिपूणां निःश्वासैः मलिनीकृतानि, तैरिव। अत्र क्रियोत्प्रेक्षालङ्कार उक्तोपमया सङ्कीर्य्यते।

(ज) आसनोल्लसितेति। आसने उपवेशनस्थले उल्लसिताः स्फुरिता ये पद्मरागकिरणा लोहितमणि-मयूखास्तैः पाटलीकृतेन रक्तीकृतेन, अतएव अचिरमृदितयोः सद्यश्छिन्नकण्ठयोः मधुकैटभयोः तदाख्ययो-र्दैत्यविशेषयोः, रुधिरेण रक्तेन अरुणं रक्तवर्णं तेन, हरिं नारायणमिव। अत्रोपमालङ्कारः।

पुरा सागरशायिनो नारायणस्य कर्णमलसम्भूतौ मधुकैटभनामानौ दैत्यौ नारायणस्यैव नाभिनलिनोत्पन्नं ब्रह्माणं भक्षयितुमुद्यतौ बभूवतुः। ततः परित्राणार्थिना ब्रह्मणा स्तूयमानो नारायण उत्थाय ताभ्यां सह पञ्चवर्षसहस्राणि यावत् बाहुयुद्धं चकार। तेन च सन्तुष्यमाणौ दैत्यौ नारायणाय वरं दातुमिच्छां प्रकाशया-मासतुः। नारायणस्तु तयोर्वधं ययाचे। तौ तु पृथिवीं जलप्लावितामवलोक्य "यत्र पृथिवी जलप्लाविता न वर्त्तते तत्र आवां जहि" इत्यूचतुः। ततस्तु नारायणः पार्थिवांशसम्पन्ने स्वकीये ऊरौ संस्थाप्य तयोः शिरसी चक्रेण चिच्छेद। इति मार्कण्डेयपुराणवार्त्ताऽत्रानुसन्धेया।

(झ) अमृतेति। अमृतफेनवत् सुधाफेनवत् धवले शुभ्रवर्णे, गोरोचनया तदाख्यपदार्थेन लिखितानि चित्रितानि यानि हंसमिथुनानि बहूनि हंसयुगलानि तैः सनाथाः सहिताः पर्य्यन्ताः प्रान्तभागा ययोस्ते, तथा चामराणां पवनेन वायुना प्रनर्त्तितौ सञ्चालितौ अन्तदेशौ प्रान्तभागौ ययोस्ते, दुकूले पट्टवसनद्वयं वसानं परिदधानम्। अत्र अमृतफेनधवले इति लुप्तोपमालङ्कारः।

(ञ) अतीति। अतिसुरभिणा परमसुगन्धेन चन्दनेन मलयजद्रवेण धवलितं शुभ्रीकृतं उरःस्थलं वक्षोदेशो यस्य तम्।

বশীভূত শত্রুগণের নিশ্বাসবায়ুতে সেগুলিকে যেন মলিন করিয়াছিল ; পূর্ব্বকালে সদ্যশ্ছিন্ন মধু ও কৈটভ দৈত্যের রুধিরে রক্তবর্ণ উরুযুগলদ্বারা নারায়ণ যেমন শোভা পাইয়াছিলেন, মহারাজ শূদ্রকও তেমন আসনস্থ পদ্মরাগমণির কিরণে রক্তবর্ণ উরুযুগলদ্বারা শোভা পাইতেছিলেন ; রাজা শূদ্রক অমৃত-ফেনের ন্যায় শুভ্রবর্ণ দু'খানা পট্টবস্ত্র পরিধান করিয়াছিলেন, তাহার প্রান্তভাগে গোরোচনা দ্বারা দুই দুইটি করিয়া হাঁস চিত্র করা ছিল, আর চামরের বায়ুতে তাহার অঞ্চলদেশ

(१)...निःश्वास...। (२)...सद्य...। (३)...नर्त्तित...।

स्थलम्, (ञ) उपरि-विन्यस्त-कुङ्कुम-स्थासकम्, (ट) अन्तरान्तरानिपतित-(१) बालातपच्छेदमिव कैलासशिखरिणम्, (ठ) अपर-शशि-शङ्कया नक्षत्रमालयेव हारलतया कृतमुखपरिवेशम्, (२) (ड) अतिचपल-राज-(३) लक्ष्मी-बन्धन (४) निगड़-शङ्कामुपजनयतेन्द्रनील-केयूरयुगलेन मलयज-रस-गन्धलुब्धेन भुजङ्गद्वयेनेव वेष्टितबाहुयुगलम् (५) (ढ) ईषदालम्बि-(६) कर्णोत्पलम्, उन्नतघोणम् उत्फुल्ल-पुण्डरीक-लोचनम् (७) अमलकलधौत-पट्टायतं (८) अष्टमीचन्द्र-शकलाकारं

(ट) उपरीति। उपरि तच्चन्दनलेपोपरि विन्यस्तो दत्तः कुङ्कुमस्थासकः कुङ्कुमचर्च्चा पद्मदलवत् कुङ्कुमलेपो यस्य तम्। "चर्च्चा तु चार्च्चिक्यं स्थासक" इत्यमरः।

(ठ) अतएवाह अन्तरेति। अन्तरान्तरा मध्ये मध्ये निपतिता: बालातपच्छेदा नवोदितरविरश्मिखण्डा यस्य तं कैलासशिखरिणमिव स्थितं। अत्रोपमालङ्कारः।

(ड) अपरेति। अपरशशिशङ्कया 'अयं अपरः शशी' इति भ्रमेण आगतया नक्षत्रमालयेव हारलतया लतावल्लम्बमानया मुक्तामालया कृतो मुखस्य परिवेशः परिधिः परिवेष्टनं यस्य तं। अत्र मुखे शशिभ्रमाद् भ्रान्तिमानलङ्कार उत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः, तेन च मुखस्य चन्द्रतुल्यत्वं हारलतायाश्च स्थूलोज्ज्वलत्वं सूचितमित्यलङ्कारेण वस्तुध्वनिः।

(ढ) अतीति। अतिचपलाया नितान्तचञ्चलाया राजलक्ष्म्याः बन्धनाय बन्धनेन स्थिरीकरणाय यो निगड़ः शृङ्खला तस्य शङ्कां भ्रमं उपजनयता कुर्वता, इन्द्रनीलकेयूरयुगलेन नीलकान्तमणिखचिताङ्गदद्वयेन मलयजरसस्य चन्दनद्रवस्य गन्धेन सौरभेण लुब्धो लोभाकृष्टस्तेन भुजङ्गद्वयेन सर्पयुगलेनेव स्थितेन वेष्टितं बाहुयुगलं भुजद्वयं यस्य तम्। अत्र भ्रान्तिमदुत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः।

(ण) ईषदिति। ईषदालम्बिनी किञ्चिल्लम्बमाने कर्णोत्पले पद्माकारकर्णालङ्कारौ यस्य तम्। उन्नता घोणा नासिका यस्य तं। "घोणा नासा च नासिका" इत्यमरः। उत्फुल्लपुण्डरीकवत् विकसितश्वेतपद्मवत् लोचने चक्षुषी यस्य तं। अत्र लुप्तोपमालङ्कारः। अमलकलधौतपट्टवत् निर्म्मलस्वर्णफलकवत् आयतं विस्तृतं, अष्टमीचन्द्रस्य अष्टमीतिथावुदितचन्द्रस्य यत् शकलं खण्डं तस्य आकार इव आकारो यस्य तं,

কম্পিত হইতেছিল; অতি সুগন্ধ চন্দন লিপ্ত থাকায় বক্ষঃস্থল শুভ্রবর্ণ হইয়াছিল; সেই চন্দনলেপের উপরে পদ্মের আকারে কুঙ্কুম লিপ্ত ছিল, তাহাতে নবোদিত সূর্য্যের কিরণসমূহ মধ্যে মধ্যে নিপতিত হইলে কৈলাসপর্ব্বতের ন্যায় রাজাকে দেখা যাইতেছিল; অপর চন্দ্রের ভ্রমে উপস্থিত নক্ষত্রশ্রেণীর ন্যায় মুক্তামালাতে রাজার মুখমণ্ডল পরিবেষ্টিত ছিল; চন্দনসৌরভলোভে সমাগত সর্পদ্বয়ের ন্যায় অবস্থিত এবং নিতান্ত চঞ্চলা রাজলক্ষ্মীর বন্ধনশৃঙ্খলভ্রমজনক নীলকান্ত-মণিখচিত কেয়ূরযুগলে রাজার বাহুযুগল পরিবেষ্টিত ছিল; পদ্মাকারে নির্ম্মিত কর্ণালঙ্কার-যুগল রাজার কর্ণযুগলে কিয়ৎপরিমাণে আলম্বিত ছিল; রাজার নাসিকা উন্নত, নয়নযুগল বিকসিত শ্বেতপদ্মের ন্যায়, ললাটদেশ নির্ম্মল স্বর্ণফলকের ন্যায় বিস্তৃত, অষ্টমীর

(१) अन्तरानिपतित…। (२)…परिवेषं। (३)…राज्य…। (४)…बन्ध…। (५) बाहुशिखरं। (६) आलम्बित…। (७)…नेत्रं। (८)…पट्टायितम्।

अशेष-भुवन-राज्याभिषेक-सलिलपूतम् (१) ऊर्णासनाथं ललाटदेशमुद्वहन्तम्, (ण) आमोदित-मालतीकुसुम-शेखरं उषसि शिखर-पर्य्यस्त-तारकापुञ्जमिव पश्चिमाचलम्, (त) आभरण-प्रभा-पिशङ्गिताङ्गतया (२) लग्न-हर-हुताशमिव मकरध्वजम् (थ) आसन्नवर्त्तिनीभिः सेवार्थमागताभिरिव (३) दिग्वधूभिर्वारविलासिनीभिः परिवृतम्, (द) अमल-मणिकुट्टिम-संक्रान्त-सकल-देह-(४) प्रतिबिम्बतया

---

अनयोरपि लुप्तोपमालङ्कारौ। अशेषभुवनराज्ये समस्तभूमण्डलराजत्वे योऽभिषेको मङ्गलस्नानं तेन पूतं पवित्रं। तथा ऊर्णा भ्रूयुगलमध्यवर्त्ती लोमावर्त्तः तया सनाथं सहितम्। "ऊर्णा भ्रूमध्यगावर्त्ते मेषादीनाञ्च लोमनि।" इति हैमः। अत्र सामुद्रकं "भ्रूद्वयमध्ये मृणालतन्तुसूक्ष्मं शुभ्रायतमेकं प्रशस्तावर्त्तं महापुरुषलक्षणम्।"

(त) आमोदितेति। आमोदितानि सञ्जातामोदानि सुरभीणि यानि मालतीकुसुमानि तैः शेखरः शिरोभूषणं यस्य तं, अतएव उषसि अरुणोदयकाले शिखरे शृङ्गे पर्य्यस्तः पतित्वा समवेतः तारकापुञ्जः नक्षत्रराशिर्यस्य तं पश्चिमाचलं अस्तपर्वतमिव स्थितम्। अत्रोपमालङ्कारः।

(थ) आभरणेति। आभरणप्रभया अलङ्कारकान्त्या पिशङ्गितानि पिङ्गलवर्णीकृतानि अङ्गानि यस्य तस्य भावस्तत्ता तया हेतुना, लग्नः संसक्तः हरहुताशः शिवस्य तृतीयनेत्रवह्निर्यस्मिन् तं तादृशं मकरध्वजं कामदेवमिव स्थितमित्युपमालङ्कारः।

(द) आसन्नेति। आसन्नवर्त्तिनीभिः निकटे विद्यमानाभिः, सेवार्थं परिचर्य्यार्थं आगताभिरुपस्थिताभिः, दिश एव वध्वस्ताभिरिव वारविलासिनीभिर्वेश्याभिः परिवृतं परिवेष्टितम्। अत्र रूपकोत्प्रेक्षयोरेकाश्रयानुप्रवेशरूपः सङ्करोऽलङ्कारः।

---

চন্দ্রখণ্ডের ন্যায় অর্দ্ধবর্ত্তুল, সমগ্রভূমণ্ডলরাজ্যের অভিষেক-জলে পরিপূত এবং ভ্রূযুগলের মধ্যবর্ত্তী বক্ররোমরাজিসংযুক্ত ছিল; সুগন্ধ মালতীকুসুমে চূড়াটি পরিবেষ্টিত ছিল, তাহাতে প্রভাতকালে উপরিভাগে নক্ষত্রসমূহ পতিত হইয়া পুঞ্জীভূত হইলে অস্তাচলের ন্যায় রাজাকে দেখা যাইতেছিল; সুবর্ণময় নানাবিধ আভরণের দীপ্তিতে রাজার সমস্ত অঙ্গ পিঙ্গলবর্ণ হইয়াছিল, সুতরাং মহাদেবের নয়নাগ্নিপরিবেষ্টিত কামদেবের ন্যায় তিনি দৃষ্টিগোচর হইতেছিলেন; পরিচর্য্যার নিমিত্ত উপস্থিত দিগ্বধূগণের ন্যায় বেশ্যাগণ নিকটবর্ত্তী হইয়া রাজাকে পরিবেষ্টন করিয়াছিল; নির্ম্মল মণিময় বদ্ধভূমিতে রাজার সমস্ত অঙ্গের প্রতিবিম্ব পতিত হইয়াছিল, অতএব বোধ হইতেছিল যেন, পতির প্রতি অনুরাগবশতঃ স্বয়ং পৃথিবীদেবী রাজাকে হৃদয়ে ধারণ

---

(१)···अभिषेकपूतं। (२)···अङ्गरागतया। (३) सेवासक्ताभिरिव। (४)···संक्रान्तप्रतिबिम्बतया, संक्रान्तदेहप्रतिबिम्बतया।

पतिप्रेम्णा वसुन्धरया हृदयेनैवोह्यमानम्, (ध) अशेषजनभोग्यतामुपनीतयाप्य-साधारणया राजलक्ष्म्या समालिङ्गितम्, (१) (न) अपरिमित-परिवारजनमप्य-द्वितीयम् (प) अनन्त-गज-तुरग-साधनमपि खड्गमात्रसहायम्, (फ) एकदेशस्थित-मपि व्याप्तभुवनमण्डलम्, (ब) आसने स्थितमपि (२) धनुषि निषण्णम्, (भ) उत्सादिताशेषद्विषदिन्धनमपि (३) ज्वलत्प्रतापानलम्, म) आयतलोचनमपि

---

(ध) अमलेति। अमलेषु निर्म्मलेषु मणिकुट्टिमेषु मणिमयवेदिकासु संक्रान्तं सञ्चरितं सकलदेहप्रतिबिम्बं यस्य तस्य भावः सा तया हेतुना, पतिप्रेम्णा तमेव भर्त्तारं प्रत्यनुरागेण वसुन्धरया पृथिव्या हृदयेन वक्षसा उह्यमानं धार्य्यमाणमिव स्थितम्। अत्र उत्प्रेक्षालङ्कारः।

(न) अशेषेति। अशेषजनानां सकललोकानां भोग्यतां दानादिना भोगयोग्यतां उपनीतयापि प्रापितयापि,असाधारणया साधारणभोग्यतारहितया इति विरोधः सर्वोत्कृष्टया इति तत्समाधानं, राजलक्ष्म्या समालिङ्गितं उपगूढम्।

(प) अपरेति। अपरिमिता असंख्याताः परिवारजनाः परिचारकलोका यस्य तं तथाभूतमपि अद्वितीयं द्वितीयजनरहितमिति विरोधः, स्वसमान-द्वितीयरहितमिति तत्परिहारः।

(फ) अनन्तेति। गजाश्च तुरगाश्च गजतुरगं समाहारद्वन्द्वः। अनन्तं असंख्यं गजतुरगं हस्त्यारोहिसेना अश्वारोहिसेना च साधनं उपकरणं सहायो यस्य तं तथोक्तमपि खड्गमात्रसहायमिति विरोधः, सर्वविध-सैन्यनिरपेक्षेण केवलतरवारिसहायेनैव सर्वसमरविजयिनमिति तत्समाधानम्। "निर्वर्त्तनोपकरणानुव्रज्यासु च साधन"मित्यमरः।

(ब) एकेति। एकदेशे सभामण्डपादौ एकस्मिन् जनपदे वा स्थितमपि व्याप्तं स्पृष्टं भुवनमण्डलं येन तमिति विरोधः, व्याप्तं स्वतेजसा आक्रान्तं आयत्तीकृतं भुवनमण्डलं मर्त्यभुवनं येन तमिति तत्परिहारः।

(भ) आसन इति। आसने राजासने स्थितमुपविष्टमपि धनुषि कार्म्मुके निषण्णमुपविष्टमिति विरोधः, धनुषि विजयविश्वासिनमिति तत्समाधानम्।

(म) उत्सादितेति। उत्सादितानि दग्धानि अशेषाणि सकलानि द्विषन्तः शत्रव एव इन्धनानि काष्ठानि येन तं तादृशमपि, ज्वलन् प्रताप एवानलो यस्य तमिति काष्ठाभावे कथं ज्वलनमिति विरोधः, ज्वलन्

---

করিয়া রাখিয়াছেন; তিনি রাজলক্ষ্মীকে সাধারণের ভোগ্য করিয়া থাকিলেও অসাধারণ রাজলক্ষ্মী তাঁহাকে আলিঙ্গন করিতেছিল;—অসংখ্য পরিজনে পরিবৃত থাকিয়াও তিনি অদ্বিতীয়, বহুতর হস্তী ও অশ্বসৈন্য সহায় থাকিলেও যুদ্ধে কেবল তরবারি তাঁহার সহায় হইত, শূদ্রক একদেশস্থায়ী হইয়াও সমগ্রভূমণ্ডলব্যাপী ছিলেন, আসনে থাকিয়াও ধনুতে নির্ভর করিতেছিলেন, শত্রুরূপ কাষ্ঠসকল দগ্ধ হইলেও তাঁহার প্রতাপানল জ্বলিতেছিল; তিনি বিস্তৃতলোচন

---

(१) समालिङ्गितदेहं। (२) आसनगतं, आसनस्थितं। (३) उत्सादितद्विषदिन्धनमपि।

सूक्ष्मदर्शनम्, (१) महादोषमपि सकलगुणाधिष्ठानम्, कुपतिमपि कलत्रचय-वल्लभम् (२) अविरत-प्रवृत्त-दानमप्यमदम्, अतिशुद्ध-(३) स्वभावमपि कृष्ण-चरितम्, अकरमपि हस्तस्थित-सकल-भुवनतलं (४) राजानमद्राक्षीत्। (य)

आलोक्य च सा दूरस्थितैव प्रचलितरत्नवलयेन रक्त-कुवलयदल-कोमलेन पाणिना जर्जरितमुखभागां वेणुलतामादाय नरपतिप्रबोधनार्थं (५) सकृत्

दीप्यमानः सर्वत्र प्रबलभावेनावतिष्ठमानः प्रतापानलो यस्येति तत्परिहारः। अत्र विषत्सु इन्धनत्वारोपः प्रतापे अनलत्वारोपस्य हेतुरिति परम्परितरूपकसङ्कीर्णो विरोधाभासोऽलङ्कारः।

(य) आयतेति। आयते दीर्घे लोचने यस्य तं तादृशमपि सूक्ष्मे क्षुद्रे दर्शने लोचने यस्य तमिति विरोधः, सूक्ष्मे अध्यात्मविषये दर्शनं ज्ञानं यस्य तमित्यविरोधः। "सूक्ष्मं स्यात् कैतवेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके।" "दर्शनं नयन-स्वप्न-बुद्धि-धर्मोपलब्धिषु।" इति च विश्वः। महान् दोषो यस्य तं तथाभूतमपि सकलानां गुणानां अधिष्ठानं आश्रयमिति विरोधः, महान्तौ दोषौ भुजौ यस्य तमिति समाधानं। "दोर्दोषा च भुजो बाहु" रिति धनञ्जयः। कुत्सितश्चासौ पतिश्चेति तं कुपतिमपि कलत्रचयवल्लभं स्त्रीगणप्रियमिति विरोधः, कुः पृथिवी तस्याः पतिमित्यविरोधः। "गोत्रा कुः पृथिवी पृथ्वी"त्यमरः। अनवरतं प्रवृत्तं दानं मदजलं यस्य तं तादृशमपि अमदं मदजलरहितमिति हस्तिसारूप्ये विरोधः, अनवरतं प्रवृत्तं दानं याचकेभ्यो धनादि-वितरणं यस्य तं तथाभूतमपि अमदं अहङ्काररहितमिति तत्समाधानम्। अतिशुद्धो निर्मलः स्वभावः प्रकृतिर्यस्य तं तादृशमपि कृष्णचरितं मलिनस्वभावमिति विरोधः, कृष्णस्य यदुपतेश्चरितमिव चरितं यस्य तमित्यविरोधः। न विद्यते करो हस्तो यस्य तं अकरमपि हस्ते करे स्थितं शासनेनायत्तं सकलं भुवनतलं यस्य तमिति विरोधः, न विद्यते सार्वभौमत्वेन नास्ति, करः अन्यस्मै राजग्राह्यधनादिदानं यस्य तमिति तत्-परिहारः।

अत्र अशेषजनभोग्यतामित्यादिकेषु द्वादशसु स्थानेषु श्लेषेण विरोधसमाधानात् द्वादशैव विरोधाभासालङ्काराः।

(र) आलोक्येति। सा चण्डालकन्या, दूरस्थितैव चाण्डालजातेर्हि जनसमास्पर्शे दोषोऽत्रावगाह्यतेति भावः, प्रचलितं पूर्वावस्थितिस्थानात् किञ्चित् भ्रष्टं रत्नवलयं यस्य तेन, तथा रक्तः स्वभावलोहितः कुवलयदलवत् उत्पलपत्रवत् कोमलो मृदुलश्च तेन। अत्र लुप्तोपमालङ्कारः। जर्जरितो जीर्णः मुखभागः अग्रदेशो यस्याः

হইয়াও সূক্ষ্মদর্শী ছিলেন, মহাদোষী (মহাবাহু) হইয়াও সকল গুণের আধার, কুপতি (পৃথিবীর রাজা) হইয়াও ভার্য্যাগণের প্রিয়, সর্ব্বদা দান করিয়াও নিরহঙ্কার এবং নিতান্ত নির্ম্মল-স্বভাব হইয়াও মলিনচরিত্র (কৃষ্ণের ন্যায় সচ্চরিত্র) ছিলেন, আর কর (খাজনা) না থাকিলেও সমগ্রভূমণ্ডল তাঁহার হস্তে অবস্থান করিতেছিল। (থ—য)

(র) চণ্ডালকন্যা রাজাকে দেখিয়া দূরে থাকিয়াই, সঞ্চলিত-রত্নবলয়ালঙ্কৃত, স্বভাবতঃ রক্তবর্ণ ও পদ্মপত্রের ন্যায় কোমল পাণিকমলে জীর্ণাগ্র একখানি বংশদণ্ড গ্রহণ করিয়া

(१) सूक्ष्मदर्शिनं। (२) कलत्रवल्लभं। (३) अत्यन्तशुद्ध...। (४) हस्तस्थितभुवनतलं।
(५)...प्रतिबोधनार्थं

सभाकुट्टिममाजघान ; येन सकलमेव तद् राजकं (१) एकपदे वनकरियूथमिव तालशब्देन तेन वेणुलताध्वनिना (२) युगपदावलितवदनमवनिपालमुखादाकृष्य चक्षुस्तदभिमुखमासीत्। (ट)

अवनिपतिस्तु 'दूरादालोकय' इत्यभिधाय प्रतीहार्य्या निर्दिश्यमानां तां वयःपरिणामशुभ्र (३) शिरसा रक्त-राजीवेक्षणापाङ्गेनानवरत-कृत-व्यायामतया

---

तां वेणुलतां वंशयष्टिं। नरपतेः शूद्रकस्य प्रबोधनार्थं स्वकार्य्यं प्रत्यभिनिवेशकरणार्थं। सभाकुट्टिमं सभाया बद्धभूमिं। येन आघातेन। राज्ञां समूह इति राजकं। एकपदे तस्मिन्नेव क्षणे "तत्क्षणैकपदे तुल्ये" इति हलायुधः तालशब्देन कांस्यकरतालध्वनिना वनकरियूथमिव वन्यहस्तिसमूह इव। वेणुलताध्वनिना वंशयष्टिशब्देन। आवलितवदनं परावर्त्तितमुखं सत् राजकस्य विशेषणमेतत्। अवनिपालमुखात् शूद्रक-वदनात् चक्षुराकृष्य तस्याः चाण्डालकन्याया अभिमुखं सम्मुखं। सहसा शब्दविशेषश्रवणे तदाभिमुख्यं लोकानां स्वाभाविकं। द्वितीयवाक्ये उपमालङ्कारः।

(ठ) अवनीति। अवनिपतिः शूद्रकः अनिमिषलोचनः तां चाण्डालकन्यां ददर्शेति वक्ष्यमाणेनान्वयः। दूरादालोकय "हे चाण्डालकन्ये ! त्वं दूरादेव राजानं पश्य" राज्ञ एकान्त-समीपगमनमपरिचितायास्तवानुचित-मिति भावः। इत्यभिधाय उक्त्वा वर्त्तमानया प्रतीहार्य्या पूर्वोक्तया द्वाररक्षिण्या निर्दिश्यमानां 'इयं सा चाण्डाल-कन्या' इति सभायां परिचाय्यमानां। वयःपरिणामेन वार्द्धक्येन शुभ्रं पक्वकेशतया धवलं शिरो मस्तकं यस्य तेन रक्तराजीववत् रक्तपद्मवत् ईक्षणापाङ्गौ नेत्रप्रान्तौ यस्य तेन। अत्र लुप्तोपमालङ्कारः। अनवरत-कृतव्यायाम-तया निरन्तरविहितपरिश्रमतया यौवनस्य अपगमेऽपि अतीतत्वेऽपि अशिथिला दृढाः शरीरस्य सन्धयः

---

তাহা দ্বারা রাজার প্রবোধ জন্মাইবার জন্য সভাবেদিতে একবার আঘাত করিয়াছিল ; যাহাতে তৎক্ষণাৎ সেই সকল রাজগণ, করতালের শব্দে বন্য হস্তি-সমূহের ন্যায় সেই বংশযষ্টির শব্দে এক সময়েই মুখ ফিরাইয়া রাজার মুখ হইতে নয়ন আকর্ষণ করিয়া সেই চণ্ডালকন্যার অভিমুখ হইয়াছিলেন।

(ঠ) "হে চাণ্ডালকন্যে! তুমি দূর হইতেই রাজাকে দর্শন কর" এই কথা বলিয়া প্রতীহারী তাহাকে রাজসভায় পরিচয় করাইয়া দিলে মহারাজ শূদ্রক অনিমেষ-লোচনে সেই চণ্ডালকন্যাকে দেখিতে লাগিলেন। একজন প্রাচীন পুরুষ সেই চণ্ডাল-কন্যার সম্মুখে অবস্থান করিতেছিল, বার্দ্ধক্যবশতঃ তাহার কেশকলাপ শুভ্রবর্ণ হইয়াছিল, নয়নের প্রান্তভাগ পদ্মের ন্যায় রক্তবর্ণ ছিল, সর্ব্বদা পরিশ্রম করায় যৌবন অতীত হইলেও শরীরের সন্ধিস্থানগুলি শিথিল হইয়াছিল না, এবং চণ্ডাল হইলেও তাহার আকৃতি নিতান্ত কঠিন ছিল না, পোষাক-পরিচ্ছদ সভ্যের মত ছিল এবং সে ধবলবর্ণ একখানি বসন পরিধান করিয়াছিল। আর সেই চাণ্ডাল-কন্যার পশ্চাদ্ভাগে একটি চণ্ডাল-বালক আসিতেছিল, তাহার কেশকলাপ ইতস্ততো বিক্ষিপ্ত

---

(१) राजन्यकं। (२) क्वचित् 'तेन वेणुलताध्वनिना' इति पाठो नास्ति। (३)...पाण्डुर...।

यौवनापगमेऽप्यशिथिल-शरीरसन्धिना सत्यपि मातङ्गत्वे नातिनृशंसाकृतिना अनुगृहीतार्य्यवेशेन (१) शुभ्र-(२) वाससा पुरुषेणाधिष्ठितपुरोभागाम्, (ख) आकुलाकुल-काकपक्षधारिणा कनक-शलाका-निर्म्मितमप्यन्तर्गत-शुकप्रभा-श्यामायमानं मरकतमयमिव पञ्जरमुद्वहता चाण्डालदारकेणानुगम्यमानां, (ग) असुर-गृहीतामृतापहरण-कृत-कपट-पटु-विलासिनीवेशस्य (३) श्यामतया भगवतो हरेरिवानुकुर्वतीं, (घ) सञ्चारिणीमिवेन्द्रनीलमणिपुत्रिकाम्, (४) (ङ) आगुल्फावलम्बिना (५) नीलकञ्चुकेनाच्छन्नशरीराम्, उपरि-रक्तांशुक-विरचिताव-

संयोगस्थानानि यस्य तेन। निरन्तर-यथासम्भवशारीरिकपरिश्रमे यावज्जीवमेव शरीरं दृढं तिष्ठतीति तु प्रत्यक्षसिद्धम्। मातङ्गत्वे चाण्डालत्वे सत्यपि नातिनृशंसा नातिक्रूरा अभीषणा आकृतिर्यस्य तेन, अनुगृहीतार्य्यवेशेन परिगृहीतसभ्यवेशेन शुभ्रवाससा श्वेतवसनेन केनचित् पुरुषेण, अधिष्ठित आश्रितः पुरोभागः अग्रभागो यस्यास्ताम्।

(ख) आकुलेति। आकुलाकुलं एकान्ताकुलं इतस्ततो विक्षिप्तं काकपक्षं शिखण्डं धारयितुं शीलं यस्य तेन। "काकपक्षः शिखण्डकः" इत्यमरः। कनकशलाकाभिः सुवर्णशलाकाभिर्निर्म्मितमपि अन्तर्गतस्य मध्यवर्त्तिनः शुकस्य पक्षिणः प्रभया कान्त्या श्यामायमानं श्यामवर्णवदाचरत्, अतएव मरकतमयमिव मरकतमणिनिष्पन्नमिव पञ्जरं उद्वहता धारयता, केनचित् चाण्डालदारकेण चण्डालबालकेन। अत्र कण्ठगतोपमाक्रियोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः।

(ग) असुरेति। असुरैर्गृहीतस्य आयत्तीकृतस्य अमृतस्य पीयूषस्य अपहरणे कृतो विहितः कपटः छलपूर्णः पटुः निपुणः विलासिनीवेशो मोहिनीवेशो येन तस्य भगवतो माहात्म्यवतो हरेर्नारायणस्य श्यामतया समानश्यामवर्णतया अनुकुर्वतीमिव स्थिताम्। अत्र क्रियोत्प्रेक्षालङ्कारः। हरेरिति पूर्ववच्छेषे षष्ठी।

पुरा समुद्रमथनादुत्थितममृतमसुराः स्वीकृतवन्तः, भगवान्नारायणस्तु तदवलोक्य मोहिनीमूर्त्तिं धारयन् असुरान् वञ्चयन् देवेभ्यस्तदमृतं दत्तवानिति भागवतवार्त्ता।

(घ) सञ्चारिणीमिति। सञ्चारिणीं गमनशीलां इन्द्रनीलमणिपुत्रिकां नीलकान्तमणि-निर्म्मित-पुत्तलिकामिव स्थिताम्। अत्र पुत्तलिकात्वजात्युत्प्रेक्षालङ्कारः।

ছিল এবং হাতে একখানি সুবর্ণশলাকা-নির্ম্মিত পিঞ্জর ছিল, তাহার মধ্যস্থিত শুক পক্ষীর দেহকান্তিতে সেই পিঞ্জরখানি শ্যামবর্ণের ন্যায় হওয়ায় যেন মরকতমণিনির্ম্মিত বলিয়া প্রতীতি হইতেছিল।

সেই চণ্ডালকন্যা, স্বকীয় শ্যামলকান্তিদ্বারা, অসুরগণ-গৃহীত অমৃত হরণের নিমিত্ত মোহিনী-মূর্ত্তিধারী ভগবান্ নারায়ণের যেন অনুকরণ করিতেছিল; তাহাকে একটি গমনশীল নীলকান্ত-

(१)...वेषेण। (२)...धवल...। (३) कपटविलासिनी,...वेषस्य। (४)...पुत्रिकामिव
(५) ...गुल्फावलम्बिनील...।

गुण्ठनां नीलोत्पलस्थलीमिव निपतितसन्ध्यातपाम्, (च)एक-कर्णासक्त-(१)दन्तपत्र-प्रभा-धवलित-कपोल-मण्डलां उद्यदिन्दुबिम्ब-च्छुरित-(२) मुखीमिव विभावरीम्, (छ) आकपिल-गोरोचना-रचित-तिलक-तृतीय-लोचनां ईशानुचरित-(३) किरात-वेशामिव भवानीम्, (ज) उरःस्थल-निवास-संक्रान्त-नारायण-देहप्रभा-श्यामलि-

---

(ङ) आगुल्फेति। आगुल्फावलम्बिना गुल्फपर्य्यन्तपातिना नीलकञ्चुकेन नीलवर्णवारवाणेन आच्छन्न-शरीरां आवृतगात्रीं, उपरि शिरसि रक्तांशुकेन रक्तवर्णवस्त्रेण विरचितं कृतं अवगुण्ठनं यया तां, अतएव निपतितः सन्ध्याकालीन आतपो रविकिरणो यस्यां तां नीलोत्पलानां कुवलयानां स्थलीं कृत्रिमां भूमिमिव। अत्रोपमालङ्कारः पदार्थहेतुककाव्यलिङ्गेन सङ्कीर्य्यते।

(च) एकेति। एकस्मिन् कर्णे आसक्तं परिहितं यत् दन्तपत्रं कर्णालङ्कारविशेषस्तस्य प्रभया धवलितं शुभ्रीकृतं कपोलमण्डलं गण्डबिम्बं यस्यास्तां, अतएव उद्यता उदयमानेन इन्दुबिम्बेन चन्द्रमण्डलेन छुरितं रञ्जितं मुखं आद्यभागो वदनञ्च यस्यास्तां तथोक्तां विभावरीं रात्रिमिव स्थिताम्। अत्रापि पूर्ववत् काव्य-लिङ्गसङ्कीर्णोपमालङ्कारः।

(छ) आकपिलेति। आकपिलया ईषत्पिङ्गलया गोरोचनया तदाख्यद्रव्यविशेषेण रचितं कृतं तिलकं तृतीयलोचनमिव यया तां, अतएव ईशस्य महादेवस्य अनुचरिता पश्चाद्गता चासौ किरातवेशा व्याधरूपिणी चेति तां भवानीं पार्व्वतीमिव स्थितां महादेववदस्य हृद्पुरुषस्यावस्थानादिति भावः। अत्राप्युपमालङ्कारः पूर्ववत् काव्यलिङ्गसङ्कीर्णः।

पुरा किलार्जुने पाशुपतास्त्रलाभाय तपश्चरति सति वराहरूपेण तं हन्तुमिच्छया गच्छन्तं मूकदानवं निहन्तुं महादेवः किरातवेशेनानुसृतवान् किरातवेशधारिणी पार्व्वत्यपि तं महादेवमनुगतवतीति महा-भारतवार्त्ता।

(ज) उर इति। उरःस्थले वक्षसि निवासेनावस्थानेन संक्रान्ता संलग्ना या नारायणस्य देहप्रभा तया श्यामलितां श्यामवर्णीकृतां श्रियं लक्ष्मीमिव।

---

মণির পুত্তলিকার (পুতুলের) মত প্রতীতি হইতেছিল.; আগুল্ফ-লম্বী নীলবর্ণ কঞ্চুকে :(সাঁজোয়াতে) তাহার দেহ আবৃত এবং উপরিভাগে রক্তবস্ত্রের অবগুণ্ঠন ছিল, তাহাতে সন্ধ্যাকালে সূর্য্যের কিরণ পতিত হইলে নীলোৎপলময় ভূমির ন্যায় তাহাকে দেখা যাইতেছিল; এক কর্ণে সংলগ্ন হস্তিদন্তনির্ম্মিত আভরণের কিরণে তাহার গণ্ডস্থল শুভ্রবর্ণ হইয়াছিল, সুতরাং উদয়মান চন্দ্রমণ্ডল-রঞ্জিত রাত্রির ন্যায় সে শোভা পাইতেছিল; সে পিঙ্গলবর্ণ গোরোচনা দ্বারা তৃতীয় নয়নের ন্যায় ললাটদেশে তিলক চিত্রিত করিয়াছিল, তাহাতে শিবের অনুগামিনী কিরাতবেশধারিণী ভবানীর ন্যায় তাহাকে দেখা যাইতেছিল; নারায়ণের বক্ষঃস্থলে বাস করায়

---

(१) अवसक्त, सुक्त…। (२) उद्यदिन्दुकिरणच्छुरित…। (३) ईशान-रञ्जनानुरञ्जित, ईशानु-रञ्जित, ईशानाचरितानुरञ्जित…।

तामिव श्रियम्, (क) कुपित-हर-हुताशन-दह्यमान-मदन-धूम-मलिनीकृतामिव रतिम्, (ख) उन्मद-हलि-हलाकर्षण-भय-पलायितामिव (१) कालिन्दीम्, (२)(ग) अतिबहल-पिण्डालक्तक-रस-राग-पल्लवित-पादपङ्कजां, अचिर-मृदित-महिषासुर-रुधिर-रक्त-चरणामिव कात्यायनीम्, (घ) आलोहिताङ्गुलि-प्रभा-पाटलित-

---

अत्र श्रियः स्वकीयगौरकान्तिपरित्यागेन नारायणस्य श्यामलगुणग्रहणात् तद्गुणालङ्कार उपमा च, अनयोरङ्गाङ्गिभावेन सङ्करः।

(ख) कुपितेति। कुपितस्य धैर्य्यभङ्गकरणेन क्रुद्धस्य हरस्य शिवस्य हुताशनेन तृतीयनयनवह्निना दह्यमानस्य मदनस्य कामदेवस्य धूमेन मलिनीकृतां रतिं मदनभार्य्यामिव स्थिताम्। अत्र तादृशधूमेन मलिनीकरणासम्बन्धेऽपि तत् सम्बन्धोक्तेरतिशयोक्तिरुपमा चानयोरङ्गाङ्गिभावेन सङ्करः।

पुरा किल मदनो देवगणानुरोधेन पार्व्वतीसमक्षं सम्मोहनास्त्रेण शिवस्य धैर्य्यमपनयन् तदीयतृतीयनयनवह्निना दग्ध इति शिवपुराणवार्त्ता।

(ग) उन्मदेति। उन्मदस्य मदमत्तस्य हलिनो बलरामस्य हलेन लाङ्गलेन यदाकर्षणं तस्माद्भयेन पलायितामपसृतां कालिन्दीं यमुनामिव स्थितामित्युपमा।

पुरा सुरापानमत्तो बलरामो जलक्रीडार्थं यमुनामाजुहाव, यदा तु यमुना नागता तदा हलाग्रेण तामाचकर्ष, सा च पलायिता इति श्रीमद्भागवतम्।

(घ) अतीति। अतिबहलस्य अतिप्रचुरस्य पिण्डालक्तकरसस्य घनीभूतालक्तकद्रवस्य रागेण लौहित्येन पल्लविते नूतनपल्लववदाचरिते पादपङ्कजे यस्यास्तां, अतएव अचिरमृदितस्य सद्यश्छिन्नकण्ठस्य महिषासुरस्य रुधिरेण शोणितेन रक्तौ लोहितवर्णौ चरणौ यस्यास्तां कात्यायनीं दुर्गामिव स्थिताम्।

अत्र रुधिररक्तशब्दयोरर्थस्यापाततः पुनरुक्तत्ववत्प्रतीतेर्भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कार उपमा च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

पुरा भगवती दुर्गा महिषरूपिणः स्वस्य मुखान्निष्क्रामन्तं महिषासुरमसिना चिच्छेद, इति मार्कण्डेयपुराणम्।

---

তাঁহার দেহের প্রভা সংলগ্ন হওয়াতে শ্যামলতাপ্রাপ্ত লক্ষ্মীর ন্যায়, কুপিত মহাদেবের তৃতীয় নয়নাগ্নিতে দহ্যমান কামদেবের ধূমে মলিনতাপ্রাপ্ত রতির ন্যায় এবং মদমত্ত বলরামের লাঙ্গল দ্বারা আকর্ষণ-ভয়ে পলায়িত যমুনার ন্যায় সেই চণ্ডাল-কন্যাকে দেখা যাইতেছিল; অতিপ্রচুর ও ঘন অলক্তকরসের লৌহিত্যে তাহার চরণকমল নব পল্লবের ন্যায় রক্তবর্ণ হইয়াছিল, তাহাতে সেই চণ্ডালকন্যা, সদ্যোনিহত মহিষাসুরের রুধিরে রঞ্জিত-চরণা দুর্গার ন্যায় দৃষ্টি-গোচর হইতেছিল; ঈষৎ রক্তবর্ণ চরণাঙ্গুলীর প্রভা, তাহার চরণের নখসমূহকে পাটলবর্ণ করিয়াছিল,

---

(१) ...हलापकर्षणमपलायिता। (२) यमुनाम्।

नख-मयूखां अतिकठिन-मणिकुट्टिम-स्पर्शमसहमानां क्षितितले पल्लवभङ्गानिव निधाय सञ्चरन्तीम्, (ङ) आपिञ्जरेणोत्सर्पिणा नूपुरमणीनां प्रभाजालेन रञ्जित-(१) शरीरतया पावकेनेव भगवता रूपैक (२)-पक्षपातिना प्रजापतिम-प्रमाणीकुर्वता जातिसंशोधनार्थमालिङ्गितदेहाम्, (च) अनङ्ग-वारण-शिरोनक्षत्र-मालायमानेन रोमराजि-लतालवालकेन मेखलादाम्ना परिगतजघनस्थलाम् (३)

(ङ) आलोहितेति। आलोहितानां अतिरक्तवर्णानां अङ्गुलीनां प्रभाभिः कान्तिभिः पाटलिताः श्वेत रक्तीकृता नखमयूखा यस्यास्तां, तथा अतिकठिनस्य मणिकुट्टिमस्य मणिमयवज्रभूमेः स्पर्शं असहमानां सुको मलचरणत्वादिति भावः, अतएव क्षितितले पल्लवभङ्गान् किसलयखण्डान् निधायेव विन्यस्य विन्यस्येव सञ्चरन्तीं व्रजन्तीं तथा सति चरणवेदना न स्यादिति भावः।

अत्र क्रियोत्प्रेक्षालङ्कारः। तथा च तादृशनखमयूखानामेव पल्लवखण्डतुल्यताप्रतीतिरिति सूचितम्।

(च) आपिञ्जरेणेति। आपिञ्जरेण ईषत्पिङ्गलवर्णेन उत्सर्पिणा ऊर्द्धगामिना नूपुरमणीनां प्रभाजालेन किरणसमूहेन रञ्जितशरीरतया हेतुना रूपैकपक्षपातिना केवलसौन्दर्य्यादरकारिणा, अतएव प्रजापतिं सृष्टि-कर्त्तारं ब्रह्माणं अप्रमाणीकुर्वता "त्वमिमामीदृशसुन्दरीं विधायापि अस्पृश्यां चण्डालजातिमेव कृतवान् तदह-मेनां शोधयामि" इत्यमनियतकर्त्तृताकं विदधता, विधातृविहितस्यान्यथाविधानाभिलाषित्वादिति भावः, भगवता पावकेन अग्निदेवेन जातिसंशोधनार्थं चण्डालत्वेनाशुचेस्तस्याः शुचित्वजननार्थमित्यर्थः आलिङ्गित-देहामिव स्थितां। "सर्वमग्नौ प्रतप्तं शुध्येत" इति पैठीनसिवचनादिति भावः। ऊर्द्धगामी नूपुरमणीनां किरणसमूहः शरीरपरिवेष्टनादग्निवत् प्रतीयते स्मेति सरलार्थः।

अत्र क्रियोत्प्रेक्षालङ्कारः। तेन च वर्ण्ण्रपि कामावेशहेतुभूततया परमसौन्दर्य्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

(छ) अनङ्गेति। अनङ्गस्य मदनस्य यो वारणो हस्ती तस्य शिरसि या नक्षत्रमाला सप्तविंशतिसंख्यक मुक्ताग्रथितमाला तद्वदाचरता मदनसम्बन्धितया मदनोद्दीपकत्वादिति भावः। "सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः।" इत्यमरः। रोमराजिः नाभिदेशात् सरलभावेनोर्द्धगामिनी या लोमश्रेणी सैव लता तस्या आलवालं मूले जलदानाय स्वल्पजलाधारः, तत्स्वरूपेण मेखलादाम्ना काञ्चीगुणेन परिगतं परिवेष्टितं जघनस्थलं नितम्बदेशो यस्यास्ताम्।

আর নিতান্ত কোমল বলিয়া অত্যন্ত কঠিন মণিময় ভূমিতে পদক্ষেপ করিতে অসমর্থ হইয়া ভূতলে যেন নূতন পল্লবসমূহ বিন্যস্ত করিয়া করিয়া তাহার উপরে সে গমন করিতেছিল; নূপুরস্থ মণিসমূহের ঈষৎপিঙ্গলবর্ণ ও ঊর্দ্ধপ্রসারী কিরণজালে তাহার সমস্ত শরীর রঞ্জিত হইয়া-ছিল, সুতরাং একমাত্র রূপের পক্ষপাতী ভগবান্ অগ্নিদেব, যেন বিধাতাকে অগ্রাহ্য করিয়া তাহার চণ্ডালজাতি শোধনের নিমিত্ত সমস্ত দেহ আলিঙ্গন করিতেছিলেন; মদনহস্তীর মস্তকস্থিত মুক্তামালার ন্যায় এবং লোমশ্রেণীরূপ লতার আলবালস্বরূপ কাঞ্চীদামে তাহার নিতম্বস্থল

(१) प्रभाजालकेनानुरञ्जित...। (२) रूप एव पक्षपातिना। (३) रसनादाम्ना परिगतजघना।

(छ) अतिस्थूल-मुक्ताफल-घटितेन शुचिना हारेण गङ्गास्रोतसेव कालिन्दीशङ्कया उपगतकण्ठग्रहाम्, (ज) शरदमिव विकसित-पुण्डरीक-लोचनाम्, (झ) प्रावृषमिव घनकेशजालाम्, (ञ) मलयमेखलामिव चन्दनपल्लवावतंसाम्, (ट) नक्षत्रमालामिव चित्र-श्रवणाभरण-भूषिताम् (ठ) श्रियमिव हस्तस्थित-

---

अत्र रोमराजौ लतात्वारोपो मेखलादाम्नि आलवालत्वारोपे निमित्तमिति परम्परितरूपकमलङ्कारः कण्ठ-गतोपमया सङ्कीर्य्यते।

(ज) अतीति। अतिस्थूलैर्मुक्ताफलैर्मौक्तिकैः घटितेन निर्म्मितेन शुचिना शुभ्रवर्णेन हारेण, कालिन्दीशङ्कया यमुनाभ्रमेण गङ्गास्रोतसेव, कृतः कण्ठग्रहो गलावलम्बनं समीपाश्रयश्च यस्यास्ताम्।

अत्र चण्डालकन्यायां समानश्यामतया यमुनाभ्रमाद् भ्रान्तिमानलङ्कारः, हारे गङ्गाप्रवाहत्वोत्प्रेक्षणाद् उत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः।

(झ) शरदमिति। विकसिते विस्फारिते पुण्डरीके श्वेतपद्मयुगलमिव लोचने चक्षुषी यस्यास्ताम्, अन्यत्र तु विकसितानि प्रस्फुटितानि पुण्डरीकाणि लोचनानीव यस्यास्ताम्।

इतःप्रभृति यक्षाधिपलक्ष्मीमिवालकोद्भासिनीमित्यन्तं यावत् पूर्णोपमालङ्कारः। श्लेषोपमेत्यन्ये।

(ञ) प्रावृषमिति। प्रावृषं वर्षाकालमिव, घनं निविड़ं केशजालं यस्यास्तां, प्रावृट्पक्षे तु घना मेघाः केशजालमिव यस्यां ताम्।

(ट) मलयेति। मलयस्य पर्वतस्य मेखलां नितम्बभूमिमिव चन्दनपल्लवेन चन्दनपल्लव एव च अवतंसः शिरोभूषणं यस्यास्ताम्।

(ठ) नक्षत्रेति। नक्षत्रमालामिव तारकाश्रेणीमिव चित्रैर्नानाविधैः श्रवणाभरणैः कर्णालङ्कारैः भूषिताम् अलङ्कृताम्, पक्षे चित्रा-श्रवणा-भरणीनामकैर्नक्षत्रविशेषैर्भूषिताम्। श्लेषादौ लिङ्गव्यत्ययेन योजना प्राक्तनैरप्यङ्गीकृता।

(ड) श्रियमिति। श्रियं लक्ष्मीमिव हस्ते करतले स्थितेन कमलेन पद्मचिह्नेन पद्मेन च शोभा यस्यास्ताम्।

---

পরিবেষ্টিত ছিল; বৃহৎ বৃহৎ মুক্তানির্ম্মিত শুভ্রবর্ণ একছড়া হার তাহার কণ্ঠদেশে লম্বিত ছিল, তাহাতে প্রতীতি হইতেছিল যেন, যমুনাভ্রমে গঙ্গাস্রোত আসিয়া উহার কণ্ঠাবলম্বন করিয়াছে; শরৎকালে যেমন তাহার নয়নের ন্যায় শ্বেতপদ্ম বিকসিত হয়, চণ্ডালকন্যারও তেমন শ্বেতপদ্মের ন্যায় নয়নযুগল বিস্ফারিত ছিল; বর্ষাকালে যেরূপ উপরিভাগে কেশকলাপের ন্যায় কৃষ্ণবর্ণ মেঘমালা উদিত হয়, চণ্ডালকন্যারও সেইরূপ মস্তকে নিবিড় কেশকলাপ ছিল; মলয়পর্ব্বতের মধ্যস্থানের যেমন চন্দনপল্লবই শিরোভূষণ, সেই চণ্ডালদারিকারও তেমন চন্দনপল্লবদ্বারা মস্তক-ভূষণ নির্ম্মিত হইয়াছিল; চিত্রা, শ্রবণা ও ভরণী নক্ষত্রে নক্ষত্রশ্রেণী যেরূপ অলঙ্কৃত হয়, চণ্ডালকন্যাও সেইরূপ বিচিত্র কর্ণালঙ্কারে অলঙ্কৃত ছিল; করতলে পদ্ম থাকায় লক্ষ্মীদেবী যেমন শোভা পাইয়া থাকেন, পাণিতলে পদ্মচিহ্ন থাকায় চণ্ডালনন্দিনীও তেমন শোভা পাইতে-

क्रमलशोभाम्, (ड) मूर्च्छामिव मनोहारिणीम् (१) (ढ) अरण्यभूमिमिव अक्षत-(२) रूपसम्पन्नाम्, (ण) दिव्ययोषितमिवाकुलीनाम् (त) निद्रामिव लोचनग्राहिणीम्, (थ) अरण्यकमलिनीमिव मातङ्गकुलदूषिताम्, (द) अमूर्त्तामिव स्पर्शवर्जिताम्, (ध) आलेख्यगतामिव दर्शनमात्रफलाम्, (न)

(ढ) मूर्च्छामिति। मूर्च्छां मोहमिव, मनोहारिणीं परमसुन्दरत्वात् चित्ताकर्षिणीं, पक्षे चैतन्यलोपकरणात् मनोहत्तिनाशिनीम्।

(ण) अरण्येति। अरण्यभूमिं वनभुवमिव, अक्षतेन कन्यात्वात् केनाप्यसम्भुक्तेन रूपेण सौन्दर्य्येण सम्पन्नां युक्तां, अन्यत्र तु अक्षतरुभिर्विभीतकवृक्षैः उपसम्पन्नां युक्ताम्। "अक्षो विभीतको वृक्ष" इत्याद्यनेकार्थध्वनिमञ्जरी।

(त) दिव्येति। दिव्या स्वर्गीया या योषित् स्त्री तामिव, अकुलीनां चण्डालत्वादनुच्चकुलजातां, पक्षे कौ पृथिव्यां लीना स्थितेति कुलीना सा न भवतीत्यकुलीना तां, भूतलास्पर्शकारिणीमित्यर्थः। देवयोनयो हि भूतलं न स्पृशन्तीति पुराणप्रवादः।

(थ) निद्रामिति। निद्रामिव, लोचनग्राहिणीं परमसौन्दर्य्यात् कामिनां नयनाकर्षिणीं, अन्यत्र मुद्रणसम्पादनेन नयनवृत्तिरोधिनीम्।

(द) अरण्येति। अरण्यकमलिनीमिव वन्यपद्मिनीमिव, मातङ्गकुलेन चण्डालवंशेन तद्वंशोत्पत्तिकतयेत्यर्थः दूषितां निन्दितां, अन्यत्र मातङ्गकुलेन हस्तियूथेन दूषितां विमर्द्दिताम्। "मातङ्गः श्वपचे गजे" इति मेदिनी।

(ध) अमूर्त्तामिति। अमूर्त्तां मूर्त्तिरहितां बुद्धिंतामिव, स्पर्शवर्जितां देहसंयोगरहिताम् "दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा। शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति।" इति मनुना चण्डालस्पर्शे स्नानविधानादिति भावः। अन्यत्र तु स्पर्शो वैशेषिकोक्तस्त्वगिन्द्रियग्राह्यो गुणविशेषस्तेन वर्जितां रहितां तन्मते बुद्धेरपि गुणत्वेन "गुणादिर्निर्गुणक्रिय" इति भाषापरिच्छेदादिति भावः।

(न) आलेख्येति। आलेख्यगतां चित्रस्थितां पुत्तलिकामिव दर्शनमात्रं केवलावलोकनमेव नतु सम्भोगादिकं फलं यस्यास्ताम्, एकत्र चण्डालत्वेन तत्सम्भोगादिनिषेधात्, अन्यत्र तु मूर्त्त्यभावेन तत्सम्भोगाद्यसम्भवादिति भावः।

ছিল; আর সে মূর্চ্ছার ন্যায় মনোহারিণী ছিল; বনভূমিতে যেমন বিভীতকবৃক্ষ (বয়ড়া গাছ) থাকে, তাহাতেও তেমন অক্ষত রূপসম্পৎ ছিল; স্বর্গবাসিনী রমণীর যেমন ভূতল স্পর্শ হয় না, চণ্ডালকুমারীরও তেমন সৎকুলে উৎপত্তি হয় নাই; নিদ্রা যেরূপ নয়নের বৃত্তি রোধ করে, সেও সেইরূপ নয়ন আকর্ষণ করিতেছিল; বনজাত পদ্মিনী যেমন হস্তিযূথের মর্দ্দনে দূষিত হয়, সেও তেমন চণ্ডালবংশে জন্মগ্রহণ করায় দূষিত ছিল; মূর্ত্তিহীন বুদ্ধির ন্যায় তাহার স্পর্শের সম্ভব ছিল না; চিত্রিত পুত্তলিকার ন্যায় তাহারও দর্শনমাত্রই ফল ছিল; চৈত্রমাসজাত

(१) मनोहराम्। (२) क्वचित् 'अक्षत'शब्दो नास्ति।

मधुमास-कुसुम-समृद्धिमिव अजातिम् (१) (प) अनङ्ग-कुसुम-चापलेखामिव मुष्टिग्राह्यमध्याम्, (फ) यक्षाधिपलक्ष्मीमिवालकोद्भासिनीम्, (ब) अचिरोपरूढ़-(२) यौवनाम्, अतिशयरूपाकृतिम्, अनिमिष-(३) लोचनो ददर्श। (भ)

दृष्ट्वा च तां (४) समुपजात-(५) विस्मयस्याभून्मनसि महीपतेः—'अहो! विधातुरस्थाने रूप (६)-निष्पादनप्रयत्नः। तथाहि, यदि नामियमात्मरूपोप-

(प) मध्विति। मधुमासस्य चैत्रमासस्य कुसुमसमृद्धिं पुष्पसम्पदमिव, अजातिं मन्वादिपरिगणित-ब्राह्मणत्वादि-जातिरहिताम्, अन्यत्र जातीकुसुमरहिताम्; "ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः। चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः।" इति मनुना चण्डालादीनां जातिहीनत्वोक्तेः "न स्याज्जाती वसन्ते…" इतिसाहित्यदर्पणे कविसमयप्रसिद्धेश्चेति भावः।

(फ) अनङ्गेति। अनङ्गस्य मदनस्य कुसुमचापलेखां पुष्पधनुर्लतामिव, मुष्टिना ग्राह्यो गृहीतुं शक्यो मध्यः कटिदेशो मध्यभागश्च यस्यास्ताम्। एतेन कटिदेशस्य नितान्तकृशत्वमतिकोमलत्वञ्च व्यज्यते।

(ब) यक्षेति। यक्षाधिपस्य कुवेरस्य लक्ष्मीं सम्पदमिव, अलकैश्चूर्णकुन्तलैः उद्भासते शोभते, अलकायां तदाख्यायां नगर्याञ्च उद्भासते या ताम्।

(भ) अचिरेति। अचिरं उपरूढं जातं यौवनं यस्यास्ताम्। अतिशयेन वाहुल्येन रूपं सौन्दर्य्यं यस्याः सा तादृशी आकृतिर्यस्यास्ताम्।

अहो परमचमत्कारिण्यपि वर्णनेयमनुपयोगितया खल्विदं चण्डालकन्यकेव विरक्तिमावहतीति रसिकैरालोचनीयम्।

(म) दृष्ट्वेति। मनसि वृत्तिरभूदित्यर्थः। तामेव मनोवृत्तिमाह अहो इति। अस्थाने अपात्रे। आत्मरूपेण स्वकीयसौन्दर्य्येण उपहसिता तिरस्कृता अशेषा समस्ता रूपसम्पत् सौन्दर्य्यसमृद्धिर्यया सा तथोक्ता, इयं कन्या। अपगते दूरीभूते स्पर्शसम्भोगसुखे यस्मात् तादृशे कुले चण्डालवंशे जन्म कृतं

কুসুম-সমূহের মধ্যে যেমন জাতীকুসুম থাকে না, তাহাতেও তেমন কোন জাতি ছিল না; কামদেবের পুষ্পময় ধনুর ন্যায় তাহারও মধ্যদেশ মুষ্টিতে গ্রহণ করা যাইত; কুবেরের সম্পত্তি যেমন অলকানগরীতে শোভিত, সেও তেমন কুন্তলকলাপে শোভিত ছিল; এবং সে নবযুবতী ও পরমরূপবতী ছিল। (প—ভ)

(ম) তাহাকে দেখিয়া রাজার বিস্ময় জন্মিল, এবং তিনি মনে মনে ভাবিতে লাগিলেন;—'কি আশ্চর্য্য! বিধাতা অপাত্রে সৌন্দর্য্য নির্ম্মাণের যত্ন করিয়াছেন; কারণ, ইহার রূপের

(१) विजातिम्। (२) उपारूढ़…। (३) अनिमेष…।

(४) 'दृष्ट्वा च तां' इति पाठः क्वचिन्नास्ति।

(५) जात…। (६) सौन्दर्य्य…।

इयिताशेषरूपसम्पदुत्पादिता, किमर्थमपगत-स्पर्श-सम्भोग-सुखे क्वतं कुले जन्म (१)। (म)

मन्ये च 'मातङ्ग-जाति-स्पर्शदोष-भयादस्पृशतेयमुत्पादिता (२) प्रजापतिना, अन्यथा कथमियमक्लिष्टता लावण्यस्य। नहि (३) करतल स्पर्श-क्लेशितानाम-वयवानामीदृशी भवति कान्तिः। (य)

सर्वथा धिग्विधातारं (४) असदृशसंयोगकारिणम्। अतिमनोहराकृति-(५) रपि क्रूरजातितया (६) येनेयमसुरश्रीरिव सतत-निन्दित-सुरता रमणीयाऽप्यु-द्वेजयति' इति। (र)

अस्या उत्पत्तिर्विहिता। तथा च यथा परमरूपसम्पद्विहिता तथा उच्चवंशे जन्मविधानमप्युचितमासी-दिति भावः।

(य) मन्ये इति। अस्पृशता अस्या देहस्पर्शमकुर्वता प्रजापतिना विधात्रा, इयं चण्डालकन्या, उत्पादिता मरीच्यादिदेवर्षिवत् केवलमनःसङ्कल्पेन निर्म्मिता, इत्यहं मन्ये इत्यर्थः। अत्र क्रियोत्प्रेक्षा-लङ्कारः मन्ये इति च तद्वाचकम्। अन्यथा स्पर्शे, इयमीदृशी, लावण्यस्य सौन्दर्य्यस्य, अक्लिष्टता अचतता कथं स्यात् कथमपि नेत्यर्थः। तदेव प्रतिपादयति नहीति। कान्तिः कमनीयता नहि भवति, आमस्वन्मय-पात्रादाविव चुम्नता स्यादिति भावः।

(र) सर्वथेति। असदृशयोर्थिरभिन्नाधिकरणत्वेन परस्परविरुद्धयोश्चण्डालत्व-परमसौन्दर्य्ययोः संयोगं एकत्र समावेशं कर्त्तुं शीलं यस्य तं विधातारं अस्याः सृष्टिकर्त्तारं धिक् निन्दामि। येन असदृश-संयोगकरणेन हेतुना। असुरश्रीरिव दैत्यलक्ष्मीरिव, सततं निन्दितं शास्त्रकृद्भिर्विगर्हितं सुरतं आर्य्याणां रमणं यस्यां सा, असुरश्रीपक्षे तु सततं निन्दिता तिरस्कृता सुरता सुरसमूहो देवगणो यया सा। इयं चण्डालदारिका, रमणीया कोमलापि क्रूरजातितया नृशंसचण्डालजातित्वेन उद्वेजयति वैचित्त्यं जनयति। इति महीपतेर्मनस्य-भूदित्यन्वयः। अत्र पूर्णोपमालङ्कारः।

निकট জগতের সমস্ত রূপসম্পদ্ তিরস্কৃত হইতেছে, সুতরাং বিধাতা যদি ইহাকে এইরূপ করিয়াই সৃষ্টি করিলেন, তবে স্পর্শ ও সম্ভোগ-সুখবর্জ্জিত চণ্ডালবংশে সৃষ্টি করিলেন কেন ?।

(য) আমি মনে করি—'বিধাতা চণ্ডালজাতির স্পর্শদোষের ভয়ে স্পর্শ না করিয়াই ইহাকে সৃষ্টি করিয়াছেন ; না হইলে ইহার লাবণ্যের এইরূপ অক্ষুণ্ণতা থাকিবে কেন ? কারণ, করস্পর্শ-পীড়িত অঙ্গসমূহের এই জাতীয় কমনীয়তা হয় না।

(র) আর, চণ্ডালজাতি ও পরমসৌন্দর্য্য—এই বিসদৃশ পদার্থদ্বয়ের একত্র সমাবেশকারী বিধাতাকে আমি সর্ব্বপ্রকারে নিন্দা করি ; যেহেতু, সর্ব্বদা দেবগণের নিন্দাকারিণী অসুরলক্ষ্মীর ন্যায় এই চণ্ডালকন্যা পরমসুন্দরী ও নিতান্ত কোমলাঙ্গী হইলেও চণ্ডালজাতি বলিয়া এবং ইহার সম্ভোগ সর্ব্বদা বিগর্হিত বলিয়া উদ্বেগ জন্মাইতেছে।

(१) अस्या जन्म। (२) मनसोत्पादिता। (३) तथाहि। (४) धिग् धिग्विधातारं। (५) मनोहरा।...
(६) क्रूरजातिजा।

एवमादि चिन्तयन्तमेव राजानमीषदवगलित-कर्णपल्लवावतंसा प्रगल्भवनितेव कन्यका प्रणनाम । ( ल )

कृतप्रणामायाञ्च तस्यां मणिकुट्टिमोपविष्टायां, स पुरुषस्तं विहङ्गममादाय(१) पञ्जरगतमेव किञ्चिदुपसृत्य राज्ञे न्यवेदयदब्रवीच्च—( व )

—"देव ! विदितसकलशास्त्रार्थः, राजनीतिप्रयोगकुशलः, पुराणेतिहास-कथालापनिपुणः, वेदिता गीतश्रुतीनां, काव्य-नाटकाख्यानक (२)-प्रभृतीनाम-परिमितानां सुभाषितानामध्येता स्वयञ्च कर्त्ता, परिहासालापपेशलः, वीणा-वेणु-मुरजप्रभृतीनां वाद्यविशेषाणामसमः श्रोता, नृत्यप्रयोगदर्शननिपुणः, चित्र-

"चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति ।" इति मनुवचनात् चण्डालीगमनं नितान्तनिन्दितमिति बोध्यम् ।

(ल) एवमिति। ईषदल्पं अवगलितौ अधोलम्बितौ कर्णयोः पल्लवावतंसौ किसलयालङ्कारौ यस्याः सा, कन्यका चण्डालकुमारी प्रगल्भवनितेव धृष्टा नारीव तादृशसभायामपि लज्जासङ्कोचाभावादिति भावः। एवमादि पूर्वोक्तप्रकारादिकम् चिन्तयन्तमेव राजानं प्रणनाम ।

(व) कृतेति। तस्यां चण्डालदारिकायां। सः अग्रगामी वृद्धः पुरुषः। पञ्जरगतमेव तं विहङ्गमं शुकं। न्यवेदयदुपहृतवान् । ✓

(श) देवेति। देव! देवतासमानप्रभाव! राजन्! विदितसकलशास्त्रार्थ इत्यादीनि प्रथमान्तानि शुकस्य विशेषणानि। पुराणेतिहासकथानामालापेषु सम्यग्भाषणेषु निपुणो दक्षः। गीतं गानं श्रुतयः स्वरारम्भकावयवीभूताः शब्दविशेषा द्वाविंशतिप्रकाराः, तासां वेदिता ज्ञाता। तथा च सङ्गीतदामोदरे "नान्दी चालनिका रसा च सुमुखी चित्रा विचित्रा घना मातङ्गी सरसाम्रता मधुकरी मैत्री शिवा माधवी । बाला शार्ङ्गरवी कला कलरवा माला विशाला जया मात्रेति श्रुतयः पुराणकविभिर्द्वाविंशतिः कीर्त्तिताः ॥"

(ল) রাজা এই জাতীয় নানাপ্রকার চিন্তা করিতে লাগিলে নির্লজ্জ রমণীর ন্যায় চণ্ডালকন্যা আসিয়া তাঁহাকে প্রণাম করিল, তখন তাহার কাণের পল্লব দু'টি নীচের দিকে কিছু ঝুলিয়া পড়িয়াছিল।

(ব) সে প্রণাম করিয়া মণিময় ভূমিতে উপবেশন করিলে, সেই প্রাচীন পুরুষ পঞ্জরস্থিত সেই শুকপক্ষীটিকে নিয়া কিছু অগ্রসর হইয়া রাজাকে উপহার দিল এবং বলিল—

(শ) "মহারাজ! এই শুকপক্ষীটি সমগ্র পৃথিবীর মধ্যে রত্নস্বরূপ; ইহার নাম বৈশম্পায়ন। এই শুক সমস্ত শাস্ত্রের প্রতিপাদ্য বিষয় অবগত আছে; রাজনীতি-প্রয়োগে দক্ষ, পুরাণ ও ইতিহাসের কথা বলিতে নিপুণ, গান ও শ্রুতি ( শোরৎ ) জানে, কাব্য, নাটক ও আখ্যায়িকা প্রভৃতি অপরিমিত মধুরভাষা পাঠ করিয়াছে, নিজেও সেই কাব্য প্রভৃতি রচনা

(१) विहङ्गमादाय, विहङ्गमं शुकमादाय। (२)...नाटकाख्यायिकाख्यानक...।

कर्म्मणि प्रवीणः, द्यूतव्यापारे प्रगल्भः, प्रणयकलह-कुपित-कामिनी-प्रसादनोपाय-चतुरः, गज-तुरग-पुरुष-स्त्री-लक्षणाभिज्ञः, सकलभूतल-रत्नभूतोयं वैशम्पायनो नाम शुकः। सर्वरत्नानाञ्च (१) उदधिरिव देवो भाजनमिति कृत्वैनमादायास्मत्-स्वामिदुहिता देवपादमूलमायाता ; तदयमात्मीयः (२) क्रियता''मित्युक्त्वा नरपतेः पुरो निधाय पञ्जरमसावपससार। (य)

अपसृते च तस्मिन् स विहङ्गराजो (३) राजाभिमुखो भूत्वा समुन्नमय्य (४) दक्षिणं चरणमतिस्पष्ट-वर्ण-स्वर-संस्कारया (५) गिरा कृतजयशब्दो राजानमुद्दिश्यार्य्यामिमां पपाठ—(ष)

---

अपरिमितानामसंख्यानां सुभाषितानां मधुरवाक्यानां, अध्येता पठिता, कर्त्ता रचयिता। परिहासालापेषु पेशलो निपुणः। असमः निरुपमः अद्वितीयः, श्रोता श्रवणेन तारतम्य-गुण-दोषाणां निर्वाचक इत्यर्थः। नृत्यप्रयोगस्य दर्शने निपुणे दक्षः दर्शनेनोत्कर्षापकर्षविवेचकः। चित्रकर्म्मणि आलेख्यकार्य्ये प्रवीणः अभिज्ञः। प्रगल्भश्चतुरः। प्रणयकलहे: प्रेमविषयकविवादैः कुपितानां कामिनीनां प्रसादनोपायेषु सान्त्वनाहेतुभूतव्यापारेषु चतुरो निपुणः। उदधिः समुद्र इव देवो भवान् भाजनं पात्रमाधारः, इति कृत्वा एतन्मनसि विचिन्त्य, अस्माकं स्वामिनो वक्ष्यमाणस्य भर्त्तुः दुहिता एषा कन्या, एनं शुकमादाय देवपादमूलं भवच्चरणसमीपं। तत्तस्मात् अयं शुकः आत्मीयो ग्रहणेन स्वस्वत्वास्पदीभूतः।

(ष) अपेति। तस्मिन् पुरुषे। समुन्नमय्य उत्तोल्य। प्राक्तन-ब्राह्मणपुण्डरीकजन्मीयसंस्कारानुवृत्तेः शुकस्यापि जयशब्दोच्चारणे दक्षिणचरणोत्तोलनं ब्राह्मणानामाशीर्वादादौ तथाचारादिति बोध्यम्। पक्षिणान्तु एकस्यैवाङ्गस्य करचरणोभयरूपत्वाच्चरणशब्दोक्तिश्च सङ्गच्छते। भानुचन्द्रस्तु ''शुकादीनां शब्दोच्चारणे तादृशो-

---

করিতে পারে, পরিহাসবাক্যে চতুর ; বীণা, বংশী ও মৃদঙ্গ প্রভৃতি বাদ্যবিশেষ শুনিয়া তাহার গুণ, দোষ ও তারতম্য নির্বাচন করিতে অদ্বিতীয় ; নৃত্য দর্শন করিয়া তাহার ভাল মন্দ বলিতে পারে ; চিত্র করিতে সুনিপুণ ; দ্যূতক্রীড়ায় সুচতুর ; প্রণয়বিবাদে কুপিত রমণীর সান্ত্বনার উপায় বেশ জানে এবং হস্তী, অশ্ব, পুরুষ ও স্ত্রীজাতির সমস্ত লক্ষণে অভিজ্ঞ। সমুদ্রের ন্যায় আপনিও সকল রত্নের আশ্রয়, এইরূপ মনে করিয়া আমাদের প্রভুকন্যা ইহাকে নিয়া আপনার চরণ-সমীপে আসিয়াছেন, সুতরাং আপনি ইহাকে গ্রহণ করুন।'' এই কথা বলিয়া সেই প্রাচীন পুরুষ পিঞ্জরখানি রাজার সম্মুখে রাখিয়া সরিয়া গেল।

(ষ) সে সরিয়া গেলে সেই পক্ষিশ্রেষ্ঠ শুক, রাজার অভিমুখ হইয়া দক্ষিণ চরণ উত্তোলন-পূর্ব্বক সুস্পষ্ট বর্ণ ও স্বরসংযুক্ত এবং ব্যাকরণ-শুদ্ধ ভাষাতে জয়শব্দ উচ্চারণ করিয়া রাজার উদ্দেশে এই আর্য্যাটি পাঠ করিল—

---

(१) सर्वरत्नानामुदधिरिव। (२) आत्मायत्तः। (३) तस्मिन् विहङ्गमराजः। (४) उन्नमय्य। (५)...वर्णसंस्कारया।

स्तनयुगमश्रुस्नातं समीपतरवर्त्ति हृदयशोकाग्नेः।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम्॥" (स)

राजा तु तां श्रुत्वा (१) सञ्जात-(२) विस्मयः सहर्षमासन्नवर्त्तिनं अतिमहार्घ-हेमासनोपविष्टं (३) अमरगुरुमिवाशेषनीतिशास्त्रपारगं अतिवयस-(४) मग्रजन्मानमखिल मन्त्रिमण्डलप्रधान-(५) ममात्यं कुमारपालितनामानमब्रवीत्। (ह)

---

ऽयं जातिस्वभाव" इत्युक्तवान्। अतिस्पष्टा सुव्यक्ताः, वर्णा अचराणि, स्वर उदात्तादिः, संस्कारो व्याकरणशुद्धिश्च यस्यां तया, गिरा वाचा। आर्य्यां आर्य्यानामकच्छन्दोबद्धं वाक्यम्।

(स) स्तनेति। अश्रुभिर्नेत्रजलैः स्नातं विहितस्नानं, हृदये पतिविनाशजनितः शोक एव अग्निः सन्तापकत्वात् तस्य समीपतरवर्त्ति नितान्तनिकटस्थायि तथा विमुक्तः परित्यक्त आहारो भोजनं येन तत् नियतोपवासीत्यर्थः, अथ च विगतो वैधव्यात् दूरं गतो मुक्ताहारो मौक्तिकमाला यस्मात् तत्, भवतो रिपुस्त्रीणां वैरिवनितानां स्तनयुगं कुचयुगलं कर्तृ, व्रतं चरतीव कमपि शास्त्रविहितं नियममनुतिष्ठतीव। अन्योऽपि व्रती त्रिसन्ध्यं स्नाति, होमाग्नेरतिसन्निधाने तिष्ठति, यथाविधानमुपवासञ्च करोति।

अत्र हृदयशोकाग्नेरिति निरङ्गं केवलरूपकं, वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः, किञ्च विमुक्ताहारमिति सभङ्गश्लेषश्चेति समुदाये संसृष्टिः।

"व्रतं शास्त्रविहितो नियम" इति दुर्गः। "सङ्कल्पविषयो व्रत" मिति स्मार्त्तः।

इयमार्य्या जातिः। यथा श्रुतबोधे—

"यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या॥"

(ह) राजेति। अतिमहार्घं अतिमहामूल्यं तत् हेमासनं सुवर्णपीठं तत्रोपविष्टं आसीनं। अमरगुरुमिव बृहस्पतिमिव। अत्रोपमालङ्कारः। अतिरिक्तं वयो यस्य तं अतिवयसं वृद्धं अग्रजन्मानं ब्राह्मणं।

---

(स) "আপনার শত্রুস্ত্রীদিগের স্তনযুগল নয়নজলে স্নান করিয়া, হৃদয়স্থিত শোকাগ্নির অত্যন্ত নিকটে থাকিয়া এবং আহার (পক্ষান্তরে মুক্তার মালা) পরিত্যাগ করিয়া যেন কোন ব্রত আচরণ করিতেছে।"

(হ) সেই আর্য্যাটি শুনিয়া রাজার বিস্ময় জন্মিল এবং তিনি নিকটবর্ত্তী, অতিমহামূল্য স্বর্ণময় আসনে উপবিষ্ট, বৃহস্পতির ন্যায় সমস্ত নীতিশাস্ত্র-পারদর্শী, বৃদ্ধ, ব্রাহ্মণ ও সকল মন্ত্রিগণের মধ্যে প্রধান কুমারপালিতনামক মন্ত্রীকে বলিলেন—

---

(१) तामार्य्यां श्रुत्वा। (२) जात…। (३) महार्घासनोपविष्टं, अतिमहार्घहेमासनोपविष्टं।
(४) अतिपरिणतवयसम्। (५) अखिलमन्त्रिमण्डले प्रधानं।

"श्रुता भवद्भिरस्य विहङ्गमस्य स्पष्टता वर्णोच्चारणे, स्वरे च मधुरता ? । प्रथमं तावदिदमेव मह-(१) दाश्चर्य्यम्, यदयमसङ्कीर्णवर्ण-प्रविभागामभिव्यक्त-मात्रानुस्वार-स्वर-संस्कारयोगां विशेष-युक्तां (२) अतिपरिस्फुटाक्षरां (३) गिर-मुदीरयति । तत्र पुनरपरम् (४) अभिमतविषये तिरश्चोऽपि मनुजस्येव संस्कार-वती (५) बुद्धिपूर्वा प्रवृत्तिः । तथाहि, अनेन समुत्क्षिप्तदक्षिणचरणेनोच्चार्य्य जयशब्दमियमार्य्या मामुद्दिश्य परिस्फुटाक्षरं (६) गीता । प्रायेण हि पक्षिणः पशवश्च भयाहार-मैथुन-निद्रा-संज्ञामात्र-(७) वेदिनो भवन्ति । इदन्तु मह-च्चित्रम् ।" (क)

(क) श्रुतेति । श्रुतेति काकुः श्रुता किमित्यर्थः । विहङ्गमस्य पक्षिणः । अयं शुकः, असङ्कीर्णः परस्परैमिश्रणेन श्रूयमाणः, वर्णानामक्षराणां प्रविभागः पार्थक्यं यस्यां ताम् । अभिव्यक्तः स्पष्टं प्रतीयमानः, मात्रा ह्रस्व-दीर्घप्लुतरूपाः, अनुस्वारः प्रसिद्धः, स्वरः कण्ठध्वनिः, संस्कारो व्याकरणशुद्धिश्च एतेषां योगः सम्बन्धो यस्यां तां । विशेषेण साधारणतः केनचिदतिरिक्तेन वस्तुना श्लेषालङ्कारेणेत्यर्थः युक्तां सम्पन्नां, अतिपरि-स्फुटाक्षरां नितान्तविस्पष्टवर्णां गिरं वाक्यं उदीरयति उच्चारयति । अत्र असङ्कीर्णवर्णप्रविभागामित्यनेन तालव्यशकार-दन्त्य-सकारादीनां उच्चारणवैषम्यमभिहितं, अतिपरिस्फुटाक्षरामित्यनेन तु सर्वविधवर्णानामेव स्पष्टोच्चारणं प्रतिपादितमिति न पुनरुक्ततादोषः । तत्रोच्चारणविषये अपरं अन्यदाश्चर्य्यमित्यर्थः । किन्तदित्याह अभीति । अभिमतविषये अभिप्रेतविषये तिरश्चोऽपि तिर्य्यग्जातेः पक्षिणोऽपि मनुजस्येव मनुष्यस्येव, संस्कारवती तत्तद्विषयानुभवजनितो भावनाख्यः संस्कारः तद्वती, बुद्धिपूर्वा बुद्धिप्रयुक्ता विवेचनपूर्विकेत्यर्थः प्रवृत्तिः कथनारम्भः । ननु भवता कथमित्थं ज्ञायत इत्याह तथाहीति । अनेन शुकेन । परिस्फुटाक्षरं यथा स्यात्तथा गीता उच्चारिता । तथा च आशीर्वादकाले ब्राह्मणानां दक्षिणहस्तोत्तोलनदर्शनात्तस्य भावनाख्य-संस्कारवशादनेनापि जयशब्दोच्चारणसमये दक्षिणचरणमुत्तोलितं, तथा 'राज्ञः स्तुतिवाद एव प्रथमः कार्य्य' इति बुद्धिप्रयुक्ता च सेयमार्य्या समुच्चारितेति महदाश्चर्य्यमेवेति भावः । भयं भीतिः आहारो भोजनं, मैथुनं स्त्रीसंसर्गः, निद्रा, प्रमीला, संज्ञा प्रवेशनिर्गमादौ सङ्केतः, नाम वा एतन्मात्रवेदिनः, केवलैतदवगन्तारः । इदन्तु तद्विलक्षणवेदित्वं महच्चित्रं अतीवाश्चर्य्यम् ।

(क) "আপনারা এই শুকপক্ষীর স্পষ্টরূপে বর্ণোচ্চারণ ও স্বরের মাধুর্য্য শুনিলেন কি ? প্রথমে ইহাই মহাশ্চর্য্য যে, এই পক্ষী সুস্পষ্ট অক্ষরে বাক্য উচ্চারণ করিয়াছে, তাহাতে তালব্য শকার ও দন্ত্য সকারপ্রভৃতি বিজাতীয় বর্ণের উচ্চারণ-বৈষম্য হইয়াছে এবং হ্রস্ব, দীর্ঘ ও প্লুতের বৈষম্য, অনুস্বার, স্বর ও ব্যাকরণশুদ্ধি সুস্পষ্ট লক্ষিত হইয়াছে। তাহাতে অপর আশ্চর্য্য এই যে, মনুষ্যের ন্যায় তির্য্যগ্জাতীয় পক্ষীরও অভিলষিত বিষয়ে মনের সংস্কার ও বিবেচনাপূর্ব্বক বলিতে আরম্ভ করা ; তাহার প্রমাণ, এই পক্ষী,

(१) महत्तरमाश्चर्य्यं, महाश्चर्य्यं । (२)...स्वरसंयोगविशेषयुक्तां, 'स्वरसंयोगां । (३) एष पाठः क्वचिन्नास्ति । (४) पुनर्यदिदं । (५) संस्कारवतः । (६) परिस्फुटाक्षरां । (७)...निद्रामात्र... ।

इत्युक्तवति भूभुजि कुमारपालितः किञ्चित्स्मितवदनो नृपमवादीत्—"देव! किमत्र चित्रम् (१)। एते हि शुककारिकाप्रभृतयो विहङ्ग-(२) विशेषा यथाश्रुतां (३) वाचमुच्चारयन्तीत्यधिगतमेव देवेन। तत्राप्यन्यजन्मोपात्त-(४) संस्कारानुबन्धेन वा पुरुषप्रयत्नेन वा संस्कारातिशय उपजायत इति नातिचित्रम्। अन्यच्च, (५) एतेषामपि पुरा पुरुषाणामिवातिपरिस्फुटाक्षरा (६) वागासीत्, अग्निशापात्त्वस्फुटालापता (७) शुकानामुपजाता, करिणाञ्च (८) जिह्वापरिवृत्तिः।" (क)

(क) इतीति। भूभुजि राजनि। किञ्चिदीषत् स्मितं हास्यं यत्र तादृशं वदनं मुखं यस्य सः। अधिगतमेव ज्ञातमेव। अन्यजन्मनि पूर्वजन्मनि उपात्तस्य गृहीतस्य प्राप्तस्य संस्कारस्य भावनाख्यस्य अनुबन्धेन इह जन्मनि अनुवृत्त्या। पुरुषाणां परिपालकजनानां प्रयत्नेन पाठनादिना उद्योगेन संस्कारातिशयः शुकशारीप्रभृतीनां भावनाख्यसंस्कारातिरेकः, उपजायते उत्पद्यते, इति हेतोः, नातिचित्रं अस्यैतादृगुच्चारणं न अत्याश्चर्यं। अस्यापि पूर्वजन्मोपात्तसंस्कारानुवृत्तिसम्भवात् एतेषामुद्योगेन तादृशशिक्षालाभसम्भवाच्चेति भावः। अन्यच्च नातिचित्रत्वे कारणान्तरञ्च, एतेषामपि शुकादीनां। अतिपरिस्फुटानि नितान्त-स्पष्टानि अक्षराणि वर्णा यस्यां सा तादृशी वाक् काक्यं, तु किन्तु। अस्फुटालापता अस्पष्टवाक्यता। करिणाञ्च हस्तिनाञ्च जिह्वाया रसनायाः परिवृत्तिः विपरीतभावेनावस्थितिः उपजातेत्यन्वयः। सुतरामस्य भाग्यवशात्तच्छापविषयतातिक्रमेण परिस्फुटालापता सम्भवत्येवेति नातिचित्रमिति भावः।

पुरा तारकासुरपीड़िता देवा ब्रह्माणं शरणं गताः। ब्रह्मा तु तानाह स्म, कार्त्तिकेयो नामाग्नेः पुत्रो भविता, स तारकासुरं हनिष्यति, अतस्तमग्निमन्विष्य तत्पुत्रं याचन्तामिति। देवास्तु अग्निमन्विष्यन्तः कुत्राप्यप्राप्नुवन्तो मंहान्तं करिणमेकं दृष्ट्वा पप्रच्छुः कुत्राग्निरिति। स करी 'अश्वत्थतरौ विलीनोऽग्नि'रित्युवाच। अथाग्निर्निष्क्रम्य "तव जिह्वा प्रतीपा भविष्यती"ति तं करिणमभिशप्य पुनः शमीमध्ये निलीनः, तदा

দক্ষিণ চরণ উত্তোলনপূর্ব্বক জয়শব্দ উচ্চারণ করিয়া আমার উদ্দেশে এই আর্য্যাটি অতিস্পষ্টাক্ষরে পাঠ করিয়াছে। প্রায়শই পক্ষী ও পশুগণ ভয়, আহার, স্ত্রীসংসর্গ, নিদ্রা ও পিঞ্জর প্রভৃতি হইতে নির্গম ও প্রবেশাদির সঙ্কেত মাত্র জানে। কিন্তু ইহার ঈদৃশ বাক্য উচ্চারণ অতীব আশ্চর্য্য।'

রাজা এই কথা বলিলে কুমারপালিত ঈষৎ হাস্য করিয়া রাজাকে বলিলেন—"মহারাজ! এ বিষয়ে আশ্চর্য্য কি আছে? কারণ, এই সকল শুকশারিকাপ্রভৃতি পক্ষিবিশেষ যেমন শোনে, তেমন বাক্যই উচ্চারণ করিয়া থাকে, ইহা আপনি অবগতই আছেন। তাহাতেও আবার পূর্ব্বজন্মের সংস্কার অনুসারে কিংবা প্রতিপালকের চেষ্টায় ইহাদের সাতিশয় সংস্কার

(१) देव! किमत्र इतिमात्रः पाठः क्वचित्। (२) विहङ्गम···।
(३) यथाश्रुतं। (४) तत्राप्यन्यजन्म...। (५) अन्यत्। (६) अतिपरिस्फुटाभिधाना।
(७) अग्निशापादपरि...। (८) शारिकानाञ्च।

इत्येवमुच्चारयत्येव तस्मिन्नशिशिरकिरणमम्बरतलस्य मध्यमारूढ़मावेदयन्, नाड़िकाच्छेद-प्रहत-पटु-पटह-नादानुसारी मध्याह्नशङ्खध्वनिरुदतिष्ठत्। तमाकर्ण्य च समासन्नस्नानसमयो विसर्जितराजलोकः क्षितिपतिरास्थानमण्डपादुत्तस्थौ। (ख)

अथ चलति महीपतावन्योन्यमतिरभस-सञ्चलन-चालिताङ्गद-पत्रभङ्ग-मकर-कोटि-पाटितांशुकपटानाम्, (१) आक्षेपदोलायमान-कण्ठदाम्नाम्, (२) अंस-

---

च दैवैः पृष्टः शुकः 'शमीगर्भे निलीनो वह्नि'रित्यभिदधे। ततस्ततोऽपि वह्निर्निःसृत्य 'त्वं वाग्विहीनो भविष्यसि' इति शुकं शशाप। इति महाभारतीया वार्त्तावानुसन्धेया।

(ख) इत्येवमिति। तस्मिन् कुमारपालिते। अशिशिरकिरणं उष्णरश्मिं सूर्यं अम्बरतलस्य आकाशस्य मध्यमारूढं मध्यस्थानगतं आवेदयन् विज्ञापयन्, तथा नाड़िकाच्छेदे सभाभङ्गमुहूर्त्तसमाप्तौ तत्काल इत्यर्थः प्रहतानां करतलादिना ताड़ितानां नानाविधयन्त्राणामित्यर्थः यः पटुः स्पष्टः पटहः वाद्यारम्भः तस्य नादानुसारी शब्दानुगामी, मध्याह्नसूचकः शङ्खध्वनिः मध्याह्नशङ्खध्वनिः। प्रतिदिनमेव तत्तत्समये तादृशध्वनिरभवदिति बोध्यम्। क्षितिपतिः शूद्रकः, आस्थानमण्डपात् सभागृहात्।

"अथ पटु...स्फुटे रोगविहीने च।" "पटहो वाद्य आरम्भे" इति च हैमः।

(ग) अथेति। महीपतौ राजनि शूद्रके चलति सभामण्डपात् गन्तुमारभमाणे सति उत्तिष्ठतां महीपतीनां सामन्तनरपतीनां अन्योन्यं परस्परं अतिमहान् सम्भ्रमः सम्मर्द्द आसीदित्यन्वयः। सर्वाणि षष्ठ्यन्तानि सामन्तमहीपतीनां विशेषणानि। अतिरभसेन नितान्तवेगेन यत् सञ्चलनं गमनं तेन चालितानां आन्दोलितानां

---

জন্মে, অতএব ইহাতে অত্যন্ত আশ্চর্য্যের বিষয় নাই। আরও দেখুন, পূর্ব্বকালে ইহাদেরও মনুষ্যের ন্যায় স্পষ্টাক্ষর বাক্য ছিল, কিন্তু অগ্নির অভিশাপে শুকপক্ষিগণের অস্পষ্টভাষিতা এবং হস্তিগণের জিহ্বার পরিবর্ত্তন হইয়াছে।

(খ) কুমারপালিত এইরূপ বলিবামাত্রই, 'সূর্য্য আকাশের মধ্যস্থানে উঠিয়াছেন', ইহা সাধারণকে জানাইয়া, সভাভঙ্গসময়ে বাদিত নানাবিধ বাদ্যযন্ত্রের সুস্পষ্ট বাদ্যারম্ভের সঙ্গে সঙ্গে (নহবৎ বাজনার সহিত) মধ্যাহ্নকালের শঙ্খধ্বনি উঠিল। তাহা শুনিয়া মহারাজ শূদ্রক, স্নানের সময় উপস্থিত হইয়াছে জানিয়া, সামন্তরাজগণকে বিদায় দিয়া সভামণ্ডপ হইতে উঠিলেন।

(গ) তদনন্তর মহারাজ শূদ্রক সভামণ্ডপ পরিত্যাগ করিয়া চলিলে, সামন্ত-রাজগণের উত্থানসময়ে পরস্পর অত্যন্ত সংঘর্ষ হইয়াছিল; অতিবেগে গমন করায় সঞ্চলিত কেয়ূর,

---

(१) पाटितांशुकपटानां, पाटितांशुकानां। (२) मालतीकण्ठदाम्नां।

स्थलोल्लसित-(१) कुङ्कुम-पटवास-धूलि-पिञ्जरित-दिशाम्, (२) आलोल मालती-कुसुम-(३) शेखरोत्पतदलि-कदम्बकानाम्, अर्द्धावलम्बिभिः कर्णोत्पलैः सूच्यमान-गण्डस्थलानाम्, गमन-प्रणाम-लालसानाम्, (४) अहमहमिकया वक्षःस्थल-प्रेङ्खोलित-हारलतानाम्, उत्तिष्ठतामासीदतिमहान् (५) सम्भ्रमो महीपतीनाम्। (ग)

इतस्ततश्च निष्पतन्तीनां स्कन्धावसक्त (६)-चामराणाम् चामरग्राहिणीनां कमल-मधु-पान-मत्त-(७) जरत्-कलहंस-नाद-जर्जरेण (८) पदे पदे रणित-

---

अङ्गदानां केयूराणां पत्रभङ्गानां आभरणविशेषाणां मकराणां मकराकृतिकर्णालङ्काराणां कोटिभिः अग्रभागैः पाटिताश्छिन्नाः अनेके पटा वसनानि येषां तेषाम्। आक्षेपेण सहसा देहसञ्चालनेन दोलायमानानि प्रचलितानि कण्ठदामानि कण्ठहारा येषां तेषां। अंसस्थलेभ्यः स्कन्धदेशेभ्यः उल्लसिताभिरुत्थिताभिः कुङ्कुमानां, पटवासानां सुगन्धचूर्णविशेषाणाञ्च धूलिभिः रेणुभिः पिञ्जरिताः पिङ्गलवर्णीकृता दिशो यैः तेषां। आलोलेभ्यो नितान्त-चलितेभ्यः मालतीकुसुमानां शेखरेभ्यः शिरोभूषणेभ्यः, उत्पतन्ति उड्डयमानानि अलिकदम्बकानि भ्रमरसमूहा येषां तेषां। अर्द्धावलम्बिभिः किञ्चिद्दुलितैरित्यर्थः कर्णोत्पलैः चुम्ब्यमानानि शिरोनमनात् स्पृश्यमानानि गण्डस्थलानि येषां तेषाम्। गमने राज्ञः प्रस्थानकाले प्रणामाय नमस्काराय लालसानां नितान्ताभिलाषुकाणाम्। अहमग्रे अहमग्रे इत्यहमहमिका मयूरव्यंसकादित्वात् साधुः तया, वक्षःस्थलेषु प्रेङ्खोलिता आन्दोलिता हारलता येषां तेषाम्। "अहमहमिका तु सा स्यात् यः परस्परं भवत्यहङ्कार" इत्यमरः।

(घ) इतस्ततेति। तदास्थानभवनं राज्ञः सभागृहं सर्वतः क्षुभितमिव उद्वेलितमिव अभवदिति वक्ष्यमाणक्रिययान्वयः; तत्र तृतीयान्तानि पदानि क्षुभितमित्यस्य करणानि, षष्ठ्यन्तानि च तत्तत्करणसम्बन्धिबोधकानि। इतस्ततश्च सर्वासु दिक्षु निष्पतन्तीनां प्रचलन्तीनां, स्कन्धेषु अवसक्तानि स्थितानि चामराणि यासां तासां

---

বক্রপত্রাকৃতি আভরণ (বাজু· বিজাটা) ও মকরাকৃতি কর্ণকুণ্ডলের অগ্রভাগে সংলগ্ন হইয়া অনেক বসন ছিন্ন হইয়াছিল; সহসা দেহ সঞ্চালন করায় অনেকের কণ্ঠমালা আন্দোলিত হইতেছিল; স্কন্ধ হইতে উত্থিত কুঙ্কুম ও সুগন্ধ চূর্ণদ্রব্যের রেণুতে দিক্‌সকল পিঙ্গলবর্ণ করিয়াছিল; মস্তকস্থিত কম্পিত মালতীকুসুমের মালা হইতে ভ্রমরগণ উড়িতেছিল; কর্ণের উৎপল ঈষৎ আন্দোলিত হইয়া গণ্ডস্থলে সংলগ্ন হইতেছিল; গমনসময়ে মহারাজকে নমস্কার করিতে অভিলাষী রাজগণের 'আমি অগ্রে আমি অগ্রে' এইরূপ ত্বরাবশতঃ হারসমূহ বক্ষঃস্থলে আন্দোলিত হইতেছিল।

(ঘ) চামরধারিণী রমণীগণ, স্কন্ধে চামর স্থাপন করিয়া ইতস্তত যাইতে লাগিল,

---

(१) स्थलोल्लासित। (२) धूलिपटलपिञ्जरितदिशां। (३) मालतीपुष्प...(४) प्रसरणसदालालसानां।
(५) आसीत् सम्भ्रमः। (६) स्कन्धदेशावसक्त···। (७)...मदमत्त...। (८)...जर्जरितेन।

मणीनां मणिनूपुराणां निनादेन, (घ) वारविलासिनीजनस्य सञ्चरतो जघन-स्थलास्फालन-(१) रसित-रत्नमालिकानां मेखलानां (२) मनोहारिणा झङ्कारेण (ङ) नूपुररवाकृष्टानाञ्च धवलिताध्यानमण्डप-सोपानफलकानां भवनदीर्घिका-कलहंसकानां कोलाहलेन, (च) रसनारसितोत्सुकानाञ्च (३) तारतर-विरावित्या-मुल्लिख्यमान-कांस्य-(४) कैङ्कार-दीर्घेण गृहसारसानां कूजितेन, (छ) सरभस-प्रचलित-सामन्तशत-चरणतलाभिहतस्य चास्थानमण्डपस्य निर्घोषगम्भीरेण (५)

चामरग्राहिणीनां स्त्रीणां, कमलमधुपानेन पद्ममधुपानेन मत्ता: जरन्तो वृद्धा ये कलहंसास्तेषां नादवत् कण्ठ-ध्वनिवत् जर्जरेण असंसक्तेन सर्वदा पृथक् पृथक् श्रूयमाणेन। अत्र लुप्तोपमालङ्कार:। पदे पदे प्रतिपदक्षेपे रणितै: शब्दिता मणयो येषु तादृशानां मणिनूपुराणां निनादेन शिञ्जितेन।

(ङ) वारेति। सञ्चरतो व्रजत: वारविलासिनीजनस्य वेश्याजनस्य, जघनस्थलानां नितम्बानां आस्फालनेन अत्यन्तोद्वेलनेन रसिता शब्दिता रत्नमालिका रत्नश्रेणी यासां तादृशीनां मेखलानां काञ्चीनां मनोहारिणा झङ्कारेण झन-झन-शब्देन।

(च) नूपुरेति। नूपुररवैराकृष्टानां तत्रानीतानां, धवलितानि स्वस्व-शरीरकान्तिभि: शुभ्रवर्णीकृतानि आस्थानमण्डपस्य सभागृहस्य सोपानफलकानि सोपानावलयो यैस्तेषां भवनदीर्घिकाकलहंसकानां गृहसरसीस्थ-कादम्बानां कोलाहलेन कलकलेन।

(छ) रसनेति। रसनानां काञ्चीनां रसितै: शब्दितै: रवैरुत्सुकानां उत्कण्ठितानां, तारतरं अत्युच्चै: विरुवन्ति शब्दायन्ते ये तेषां, उल्लिख्यमानस्य घृष्यमाणस्य कांस्यस्य तैजसविशेषस्य कैङ्कारवत् 'कें' 'कैं' इत्यव्यक्तशब्दवत् दीर्घेण महता, गृहसारसानां भवनस्थसारसपक्षिणां कूजितेन अव्यक्तशब्देन। लुप्तोपमा।

(ज) सरभसेति। सरभसं सवेगं प्रचलितस्य गन्तुं प्रवृत्तस्य सामन्तशतस्य बहुतराधिकृतनृपतीनां

তাহাদের প্রত্যেক পদক্ষেপে মণিময় নূপুরের শব্দ হইতেছিল, সেই শব্দসমূহ, পদ্মমধুপানে মত্ত বৃদ্ধ কলহংসগণের ধ্বনির ন্যায় পৃথক্ পৃথক্ ভাবে কর্ণগোচর হইতেছিল। (ঙ) গমনকালীন বেশ্যাগণের নিতম্বস্থলের আস্ফালনে শব্দায়মান রত্নময় কাঞ্চীর মনোহর 'ঝন ঝন' শব্দ হইতে লাগিল। (চ) রাজবাটীর সরোবরস্থ কলহংসগণ নূপুরের রবে আকৃষ্ট হইয়া সভাগৃহের সোপান-শ্রেণী শ্বেতবর্ণ করিয়া কোলাহল করিতেছিল। (ছ) স্বভাবত উচ্চশব্দকারী রাজবাটীর সারস-পক্ষিগণ মেখলার শব্দে উৎকণ্ঠিত হইয়া, ঘর্ষণকালীন কাঁসার শব্দের ন্যায় উচ্চস্বরে শব্দ করিতে লাগিল। (জ) বেগগামী সামন্তরাজগণের চরণের আঘাতে সভামণ্ডপ হইতে মেঘগর্জনের ন্যায়

(१) जघनस्थलस्खलास्फालन...। (२) मणिमेखलानां। (३) ...उत्सुकितानाञ्च। (४)...कांस्य...।
(५) निर्घोषगम्भीरेण, निर्घातनिर्घोषगम्भीरेण।

कम्पयन्तीव वसुमतीं ध्वनिना, (१) (ज) प्रतीहारिणाञ्च पुरः ससंभ्रमसुत्सारितजनानां (२) दण्डिनां समारब्धहेलमुच्चैरुच्चारयतामालोकयतालोकयतेति (३) तारतर-दीर्घेण (४) भवन-प्रासाद-कुञ्जेषूच्चरित-प्रतिशब्दतया (५) दीर्घतरता-(६) मुपगतेनालोकशब्देन, (झ) राज्ञाञ्च ससंभ्रमावर्जित-मौलि-लोल-चूडामणीनां प्रणमताममल-मणिशलाका-दन्तुराभिः किरीट-कोटिभिरुल्लिख्यमानस्य मणि-

---

चरणतलैः अभिहतस्य ताड़ितस्य, आस्थानमण्डपस्य सभागृहस्य, निर्घोषवत् मेघध्वनिवत् गम्भीरेण, वसुमतीं पृथिवीं कम्पयतेव ध्वनिना शब्देन। अत्र वाच्यक्रियोत्प्रेचालुप्तोपमयोरङ्गाङ्गिभावेन सङ्करः।

(झ) प्रतीति। दण्डिनां यष्टिग्राहिणां, पुरः राज्ञोऽग्रतः, ससम्भ्रमं सत्वरं समुत्सारिता दूरीकृता जना लोका यैस्तेषां, समारब्धा प्रवर्त्तिता हेला अवज्ञा यस्मिन् कर्म्मणि तद्यथा तथा "हेलावज्ञा-विलासयो"-रिति विश्वकोषः, राजगमनपथरोधिनासावधानत्वादवज्ञेति भावः। आलोकयतालोकयत भूमण्डलेश्वरो गच्छतीति पश्यत पश्यत इति उच्चैरुच्चारयतां ब्रुवतां मार्गावरोधिनां सावधानताजननार्थमिदमुच्चैरुच्चारणमिति भावः। प्रतीहारिणां द्वारपालानाञ्च तारतरदीर्घेण अतीवायतेन, भवनस्य राजवाटस्य प्रासादानां देवगृहाणां राजगृहाणाञ्च कुञ्जेषु लताद्याच्छादितस्थानेषु उच्चरित उद्गतः प्रतिशब्दो यस्य स तथोक्तः तस्य भावस्तया, दीर्घतरतां अतीवायतत्वं उपगतेन प्राप्तेन, आलोकस्य दर्शनवाचकपदस्य आलोकयतालोकयतेत्येवंरूपस्य शब्देन उच्चारणध्वनिना।

(ञ) राज्ञामिति। ससम्भ्रमं सत्वरं आवर्जितेषु प्रणामायावनमितेषु मौलिषु मूर्द्धसु लोला मौलिकम्पनेन कम्पिताः चूड़ामणयः शिरोमणयो येषां तेषाम् "मौलिः किरीटे धम्मिल्ले चूड़ाकङ्केलिमूर्द्धसु।" इति हेमः। प्रणमतां शूद्रकाय नमस्कुर्वतां राज्ञाञ्च, अमला स्वच्छा या मणिशलाका रत्ननिर्म्मितशलाकास्ताभिः दन्तुरा विषमास्ताभिः, किरीटकोटिभिः मुकुटाग्रभागैः उल्लिख्यमानस्य घृष्यमाणस्य मणिकुट्टिमस्य मणिमयबद्धभूमेः निस्वनेन शब्देन।

---

গম্ভীর শব্দ উত্থিত হইয়া পৃথিবীকে যেন কম্পিত করিতেছিল। (ঝ) যষ্টিধারী দৌবারিকগণ, রাজার সম্মুখ হইতে লোকদিগকে সত্বর অপসারিত করিতেছিল এবং অবজ্ঞার সহিত উচ্চৈঃস্বরে 'দেখ দেখ' এইরূপ বলিতেছিল, তাহাদের সেই উচ্চকণ্ঠধ্বনি, রাজবাটীর প্রাসাদসমূহের নিভৃতস্থানে উত্থিত প্রতিশব্দদ্বারা অত্যন্ত দীর্ঘরূপে পরিণত হইতেছিল। (ঞ) সামন্তরাজগণ, সম্ভ্রমের সহিত মস্তক অবনত করিয়া সম্রাট্ শূদ্রককে নমস্কার করিতেছিলেন, তখন তাঁহাদের চূড়ামণি-সমূহ কম্পিত হইতেছিল এবং নির্ম্মল মণিময় শলাকাতে বিষমীকৃত মুকুটাগ্রদেশের

---

(१) क्वचित् 'ध्वनिना' इति पाठो नास्ति। (२) प्रतिहाराणां, ससम्भ्रमजनानां,...जानपदानां। (३) आलोकयन्त्विति। (४) तारदीर्घेण। (५)···प्रतिच्छन्दतया। (६) दीर्घतां।

कुट्टिमस्य निस्वनेन, (१) (ञ) प्रणामपर्य्यस्तानामतिकठिन-मणिकुट्टिम-निपतन-(२)-रणरणायितानाञ्च मणिकर्णपूराणां निनादेन, (ट) मङ्गलपाठकानाञ्च पुरोयायिनां जयजीवेति मङ्गलमधुरवचनानुयातेन (३) पठतां दिगन्तव्यापिना कलकलेन, (ठ) प्रचलित-जन-चरणशत-संक्षोभ-भयादपहाय (४) कुसुमप्रकर-मुत्पततञ्च मधुलिहां हुङ्कृतेन, (ड) संक्षोभादतित्वरितपदप्रवृत्तै-(५) रवनि-पतिभिः केयूरकोटिताड़ितानां क्वणित-मुखर-रत्नदाम्नाञ्च मणिस्तम्भानां रणितेन सर्वतः क्षुभितमिव तदास्थानभवनमभवत्। (ढ)

अथ विसर्जितराजलोको "विश्रम्यता"मिति स्वयमेवाभिधाय तां चाण्डाल-(६)

(ट) प्रणामेति। प्रणामे नमस्कारकाले पर्य्यस्तानां पतितानां भूतललग्नानां अतिकठिने मणिकुट्टिमे निपतनेन रण-रणायितानां 'रण-रण' इति शब्दं कुर्वतां मणिकर्णपूराणां तेषां राज्ञामिव रत्नमयकर्णाभरणानां निनादेन शब्देन।

(ठ) मङ्गलेति। पुरोयायिनामग्रगामिनां पठतां कीर्त्तिगाथामुच्चारयतां मङ्गलपाठकानां वन्दिनाञ्च जय-जीवेति मङ्गलमधुरवचनेन अनुयातः अनुसृतस्तेन, दिगन्तव्यापिना दूरप्रसारिणेत्यर्थः कलकलेन कोलाहलेन।

(ड) प्रचलितेति। प्रचलितानां गन्तुमारभमाणानां जनानां चरणशतस्य बहुतरचरणानामित्यर्थः संक्षोभभयात् प्रहारत्रासात् कुसुमप्रकरं पुष्पसमूहं विहाय उत्पततां उड्डीनं कुर्वतां मधुलिहां भ्रमराणां हुङ्कृतेन शब्देन।

(ढ) संक्षोभादिति। संक्षोभात् सार्वभौमस्याभिवादनाय चित्तावेगवशात्, अतित्वरितपदेषु नितान्तसत्वर-पदक्षेपेषु प्रवृत्तैः कृतारम्भैः अवनिपतिभिः सामन्तैः कर्त्तृभिः केयूराणामङ्गदानां कोटिभिरग्रभागैः करणैः ताड़ितानामाहतानां, क्वणितेन तत्ताड़नशब्देन मुखराणि शब्दायमानानि रत्नदामानि रत्ननिर्म्मितवेष्टनशृङ्खला येषु तेषां मणिस्तम्भानां मणिमयस्थूणानां रणितेन शब्देन च, तदास्थानभवनं सभागृहं सर्वतः क्षुभितमुद्वेलित-मिव अभवदित्यन्वयः पूर्वमप्युक्तः।

(ण) अथेति। विसर्जिता मधुरवचनेनाभाष्य परित्यक्ता राजलोकाः सामन्ता येन स तथोक्तो नरपतिः

ঘর্ষণে মণিময় ভবনাঙ্গন হইতে শব্দ উত্থিত হইতেছিল। (ট) নমস্কারের সময় অত্যন্ত কঠিন মণিময় ভবনাঙ্গনে নিপতিত হইয়া সামন্তরাজগণের রত্নময় কর্ণাভরণ 'রণ রণ' শব্দ করিতেছিল। (ঠ) অগ্রগামী স্তুতিপাঠকগণ, রাজার কীর্ত্তিকলাপ উচ্চারণ করিয়া 'জয় হউক, দীর্ঘজীবী হউন' এইরূপ মঙ্গলকর মধুর বাক্যের সহিত দূরগামী কোলাহল করিতেছিল। (ড) স্বস্বগন্তব্যস্থানগামী জন-সমূহের চরণাঘাতের ভয়ে ভ্রমরগণ, কুসুমসমূহ পরিত্যাগপূর্ব্বক উড্ডীন হইয়া 'ভন ভন' শব্দ করিতেছিল। (ঢ) আর ব্যস্ততাবশতঃ দ্রুতগামী সামন্ত-রাজগণের কেয়ূরাগ্রের তাড়নে শব্দায়মান রত্নশৃঙ্খলা-বেষ্টিত মণিময় স্তম্ভসমূহের শব্দ হইতেছিল। নানাজাতীয় এই সকল শব্দে সেই সভামণ্ডপ যেন সর্ব্বতোভাবে উদ্বেলিত হইয়াছিল।

(ণ) তদনন্তর মহারাজ শূদ্রক, উপস্থিত সামন্তরাজগণকে মধুরালাপে বিদায় করিয়া

(१) स्वनेन, निःस्वनेन। (२) निपतित…। (३) मधुरवचनानुपातेन।

(४) संक्षोभाद्विहाय। (५) त्वरितपदं प्रवृत्तैः, त्वरितपदं प्रसृतैः। (६) चण्डाल..।

कन्यकां, "वैशम्पायनः प्रवेश्यतामभ्यन्तरम्" (१) इति ताम्बूलकरङ्कवाहिनी-मादिश्य कतिपयाप्तराजपुत्रपरिवृतो नरपतिरभ्यन्तरं प्राविशत्। (ण)

अपनीताशेष-भूषणश्च दिवसकर इव विगलितकिरणजालः चन्द्रतारकाशून्य इव गगनाभोगः समुपाहृत-समुचित-व्यायामोपकरणां व्यायामभूमिमयासीत्। (त)

स तस्याञ्च समानवयोभिः सह राजपुत्रैः कृतमधुरव्यायामः, श्रमवशादुन्मि-षन्तीभिः कपोलयोरीषदवदलित-सिन्धुवार-(२) कुसुम-मञ्जरी-विभ्रमाभिः,

---

शूद्रकः, स्वयमेव तां चाण्डालकन्यकां विश्रम्यतां विश्रामः क्रियतामित्यभिधाय उक्त्वा, वैशम्पायनः स शुकः अभ्य-न्तरं गृहमध्यं प्रवेश्यतां नीयतामिति ताम्बूलकरङ्कवाहिनीं पर्णवीटिकाधारिणीं स्त्रियं आदिश्य, कतिपये-रल्पसंख्यकैः, आप्तैर्विश्वस्तैः राजपुत्रैः परिवृतः परिवेष्टितः सन् अभ्यन्तरं भवनमध्यम्।

(त) अपेति। अपनीतानि देहात् विमुक्तानि अशेषाणि सकलानि भूषणानि आभरणानि येन सः, अतएव विगलितकिरणजालः सन्ध्याकाले विलुप्तरश्मिसमूहः दिवसकरः सूर्य्य इव, स्वतस्तेजस्वित्वादिति भावः। तथा चन्द्रतारकाशून्यः गगनाभोगः नभोविस्तारः विस्तृताकाश इव विशालदेहत्वादिति भावः। समुपाहृतानि किङ्करैर्नीतानि समुचितानि योग्यानि व्यायामोपकरणानि परिश्रमकरणोपयोगिद्रव्याणि लौह-मुद्‌गरादीनि यस्यां ताम्। अत्रोपमालङ्कारयोर्मिथोनिरपेक्षतया संसृष्टिः।

नायं खल्विदानीन्तनो धनियुवेव केवलविलासपेशल आसीत्, येन प्रचुरतरमाहार्य्यमभ्यवहार्य्य-वातपीवर-शरीरो रात्रिन्दिवं निद्रामुपेयादिति।

(थ) स इति। तस्यां व्यायामभूमौ समानवयोभिः राजपुत्रैः सह कृतमधुरव्यायामः विहितसुदृश्य-परिश्रमः स राजा स्नानभूमिमगच्छदिति परेणान्वयः। अलङ्क्रियमाणमूर्त्तिरितिराजविशेषणस्य 'स्वेदजल-कणिकासन्ततिभि'रिति करणपदं, अन्यानि तृतीयान्तपदानि च तस्योपमानवाचकानि। श्रमवशात् कपोलयो-र्गण्डयोः उन्मिषन्तीभिराविर्भवन्तीभिः। ईषदवदलितं किञ्चिदुद्भिन्नं प्रकाशितं यत् सिन्धुवारकुसुमं तस्य

---

নিজেই সেই চণ্ডালকন্যাকে বলিলেন, "তুমি এখন বিশ্রাম কর" এবং তাম্বূলকরঙ্কবাহিনীকে আদেশ করিলেন, "বৈশম্পায়নকে বাটীর মধ্যে লইয়া যাও"—তাহার পর স্বয়ং বাটীর মধ্যে প্রবেশ করিলেন।

(ত) প্রবেশপূর্ব্বক দেহ হইতে সমস্ত আভরণ উন্মোচন করিয়া সন্ধ্যাকালীন কিরণ-জালবিহীন সূর্য্যের ন্যায় এবং চন্দ্র ও নক্ষত্র-শূন্য আকাশের ন্যায় শূন্যদেহে ব্যায়ামস্থানে গমন করিলেন, সে স্থানে পরিচারকগণ পূর্ব্বেই ব্যায়ামোপযোগী লৌহমুদ্গর প্রভৃতি আনিয়া রাখিয়াছিল।

(থ) মহারাজ শূদ্রক সেই ব্যায়াম-ভূমিতে সমবয়স্ক রাজপুত্রগণের সহিত সুদৃশ্য ব্যায়াম করিলেন, সেই পরিশ্রমে তাঁহার কপোলযুগলে ঘর্ম্মবিন্দু নির্গত হইয়া ঈষৎ প্রস্ফুটিত সিন্ধুবার-

---

(१) अभ्यन्तरं स्नानपानाशनादिना च सुखिनमेनं कारयेति, अभ्यन्तरमशनादिना चोपचर्य्यताम्।

(२)...अवमलितं-सितसिन्धुवार...।

उरसि निर्दयश्रम-(१) च्छिन्न-हार-विगलित-मुक्ताफल-प्रकरानुकारिणीभिः, ललाटपट्टकेऽष्टमी-चन्द्र-शकल-तलोल्लसदमृतबिन्दु-विडम्बिनीभिः स्वेदजलकणिका-सन्ततिभिरलङ्क्रियमाणमूर्त्तिः, (थ) इतस्ततः स्नानोपकरण-सम्पादनसत्वरेण पुरःप्रधावता (२) परिजनेन (३) तत्कालं विरलजनेऽपि (४) राजकुले समुत्-सारणाधिकारमुचितमाचरद्भि-(५) र्दण्डिभिरुपदिश्यमानमार्गः, (द) वितत-सितवितानाम्, अनेक-चारणगण-निबध्यमानमण्डलाम् (६) गन्धोदक-पूर्ण-कनक-

मञ्जर्य्या इव विभ्रमो विलासो यासां ताभिः। अत्र लुप्तोपमालङ्कारः। उरसि वक्षसि निर्दयश्रमेण कठिन-परिश्रमेण छिन्नो यो हारस्तस्मात् विगलितानां पतितानां मुक्ताफलानां प्रकरं समूहं अनुकर्त्तुं शीलं यासां ताभिः। अत्रार्थीयमुपमालङ्कारः। ललाटपट्टके भालस्थले, अष्टमीचन्द्रशकलतले अष्टमीतिथिसमुदितचन्द्र-खण्डे उल्लसन्तो दीप्यमाना ये अमृतबिन्दवस्तान् विडम्बयितुं अनुकर्त्तुं शीलं यासां ताभिः। अत्राप्यार्थी-यमुपमा। अष्टमीपदं ललाटस्य अष्टमीचन्द्राकारताद्योतनार्थं। स्वेदजलकणिकासन्ततिभिः घर्म्मबिन्दुश्रेणीभिः अलङ्क्रियमाणा मूर्त्तिः शरीरं यस्य सः।

(द) इतस्तत इति। स्नानोपकरणानां जलादीनां सम्पादने सत्वरेण त्वरान्वितेन, अतएव पुरःप्रधा-वता अग्रतो द्रुतं गच्छता, परिजनेन परिचारकलोकेन, उपदिश्यमानेत्यस्य कर्त्तृपदमेकमेतत्। तथा तत्-कालं तस्मिन् मध्याह्नसमय इत्यर्थः, विरला अल्पा जना यत्र तादृशेऽपि, सुतरामुत्सारणाया अनावश्यक-त्वेऽपीति भावः, राजकुले राजभवने, उचितं योग्यं स्वकर्त्तव्यं इत्यतः समुत्सारणाधिकारं जनसम्मर्द्द-निवारणकार्य्यं आचरद्भिः कुर्वद्भिः, दण्डिभिः यष्टिधारिभिः पुरुषैः, उपदिश्यमानः प्रदर्श्यमानः मार्गः स्नानभूमिगमनपथो यस्य सः। राजविशेषणमेतत्।

(ध) विततेति। द्वितीयान्तानि स्नानभूमिविशेषणानि। विततं उपरि विस्तीर्णं सितं शुभ्रं वितानं

কুসুমের (নিসিন্দাফুলের) মঞ্জরীর ন্যায় শোভা পাইতে লাগিল; বক্ষঃস্থলে ঘর্ম্মবিন্দু বহির্গত হইয়া, কঠিন পরিশ্রমে ছিন্ন হার হইতে বিগলিত মুক্তাসমূহের অনুকরণ করিতে লাগিল; আর ললাটদেশে ঘর্ম্মবিন্দু নির্গত হইয়া, অষ্টমীর চন্দ্রখণ্ডের উপরিভাগস্থিত অমৃতবিন্দুসমূহের ন্যায় বিরাজ করিতেছিল; তখন সেই ঘর্ম্মবিন্দুসমূহে তাঁহার দেহ অলঙ্কৃত হইয়াছিল।

(দ) এদিক্ ওদিক্ হইতে স্নানীয় দ্রব্য আনয়ন করিবার নিমিত্ত ত্বরান্বিত পরিজনগণ অগ্রে অগ্রে দ্রুত গমন করিয়া এবং সেই সময়ে রাজবাটীতে অল্প লোক থাকিলেও যষ্টিধারী পুরুষগণ নিজেদের কর্ত্তব্য বলিয়া জনসংঘর্ষনিবারণের ভাণ দেখাইয়া মহারাজকে স্নানস্থানে যাইবার পথ বলিয়া দিতেছিল।

(ধ) এই ভাবে মহারাজ স্নানস্থানে উপস্থিত হইলেন; সে স্থানের উপরিভাগে শ্বেতবর্ণ চন্দ্রাতপ বিস্তৃত ছিল; অনেক স্তুতিপাঠকগণ চতুর্দ্দিকে মণ্ডলাকারে দণ্ডায়মান ছিল;

(१)...रतिश्रम, रतिविभ्रम...। (२) प्रधाविना।
(३) परिजनेनानुगम्यमानः। (४) विरलतरेऽपि। (५) समाचरद्भिः। (६) आबध्यमानमण्डला।

मय-द्रोणी-(१) सनाथमध्याम्, उपस्थापित-स्फाटिक-स्नानपीठाम्, एकान्त-निहितैरतिसुरभिगन्धसलिलपूर्णैः परिमलावकृष्ट मधुकर-कुलान्धकारितमुखैरातप-भयान्नीलकर्पटावगुण्ठितमुखैरिव स्नानकलसैरुपशोभितां स्नानभूमिमगच्छत्। (ध)

अवतीर्णस्य च (२) जलद्रोणीं वारविलासिनी-कर-मृदित-सुगन्धामलक-लिप्तशिरसो राज्ञः समन्तात् समुपतस्थुरंशुक-निविड़-निबद्ध-(३) स्तनपरिकराः,

---

चन्द्रातपो यस्यां ताम्। अनेकैश्चारणगणैः कुशीलवैः स्तुतिपाठकैः निबध्यमानं क्रियमाणं मङ्गलं मङ्गला-कारिणावस्थानं यस्यां तां। गन्धोदकैः सुरभिसलिलैः पूर्णा कनकमयी सुवर्णनिर्म्मिता या द्रोणी वृहज्जल-पात्रविशेषः, तया सनाथः सहितो मध्यो मध्यस्थानं यस्यास्ताम्। उपस्थापितं निहितं स्फाटिकं स्फटिक-निर्म्मितं स्नानपीठं यस्यां ताम्। एकान्ते स्नानभूमेरेकस्मिन् पार्श्वे निहितैः स्थापितैः। एतानि तृतीयान्त-पदानि स्नानकलसैरित्यस्य विशेषणानि। अतिसुरभिः अतीवघ्राणतृप्तिकारी गन्धो येषां तादृशैः सलिलैः पूर्णा भृतास्तैः, अतएव परिमलेन जलसौरभेण अवकृष्टं आकृष्टं यत् मधुकरकुलं भ्रमरसमूहः तेन अन्धकारि-तानि सञ्जातान्धकारीकृतानि मुखानि येषां तैः, अतएव आतपभयात् रविकिरणसन्तापभयात् नीलकर्पटैः कृष्णवर्णजीर्णवस्त्रखण्डैः, अवगुण्ठितानि आवृतानि मुखानि यैस्तैरिव स्थितैः। अत्र वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः।

(न) अवेति। अवतीर्णस्य जलद्रोणीमध्ये प्रविष्टस्य, वारविलासिनीभिः गणिकाभिः करैर्हस्तैः मृदितेन पिष्टेन सुगन्धेन सुरभिणा आमलकेन आमलकीफलविशेषेण लिप्तं शिरो यस्य तस्य, राज्ञः शूद्रकस्य, समन्तात् सर्वासु दिक्षु। अंशुकैः स्वस्वपरिहितवसनैः निविड़ं दृढ़ं यथा स्यात्तथा निबद्धा आस्फालननिवा-रणार्थं संयताः स्तनपरिकराः कुचाभोगा याभिस्ताः। इत्यादीनि प्रथमान्तानि वारयोषित इत्यस्य विशेषणानि। दूरे उपरिभागे समुत्सारितानि झणत्कारादुपद्रवनिवारणार्थं उत्तोलितानि वलयानि यासां तास्तथोक्ता वाहुलता यासां ताः। समुत्क्षिप्तानि नयनगण्डोपरिपतननिवारणाय ऊर्द्धमुत्क्षिप्य बद्धानि कर्णा-

---

মধ্যস্থানে সুগন্ধ জলপূর্ণ সুবর্ণনির্ম্মিত একটা দ্রোণী (বড় গামলা) এবং স্ফটিকময় এক-খানা স্নানপীঠ সংস্থাপিত ছিল; একদিকে অতিসুগন্ধ জলপূর্ণ বহুতর কলস রাখিয়াছিল, সেই জলের সৌরভে ভ্রমরগণ আসিয়া সেই কলস-সমূহের মুখভাগ অন্ধকার করিয়াছিল; তাহাতে বোধ হইতেছিল যেন, কলসসমূহ রৌদ্রের ভয়ে নীলবস্ত্রে মুখ আচ্ছাদন করিয়া রাখিয়াছে।

(ন) মহারাজ সেই জলদ্রোণীমধ্যে প্রবেশ করিলে কতকগুলি বেশ্যা, স্বহস্ত-মর্দ্দিত সুগন্ধ আমলকী দ্বারা তাঁহার মস্তক লিপ্ত করিয়া দিল; এবং আর কতকগুলি বেশ্যা পরিধেয় বসন দ্বারা স্তনদেশ দৃঢ়ভাবে বন্ধন করিয়া, হস্তবলয় দূরে উৎক্ষিপ্ত করিয়া, কর্ণালঙ্কার উপরে উত্তোলন

---

(१) जलद्रोणी। (२) क्वचित् चकारो नास्ति। (३) अंशुकविनिबद्ध…।

दूरसमुत्सारित-वलय-बाहुलताः, समुत्क्षिप्तकर्णाभरणाः (१) कर्णोत्सङ्गोत्सारितालकाः, गृहीतजल-कलसाः स्नानार्थमभिषेकदेवता इव वारयोषितः। (न)

ताभिश्च समुन्नत-कुचकुम्भ-मण्डलाभिर्वारिमध्यप्रविष्टः करिणीभिरिव वनकरी परिवृतस्तत्क्षणं रराज राजा। (प)

द्रोणीसलिलादुत्थाय च स्नानपीठममलस्फटिकधवलं वरुण इव राजहंसमारुरोह। (फ)

---

भरणानि याभिस्ताः। कर्णोत्सङ्गात् श्रवणसमीपात् उत्सारिता नयनावरणनिवारणार्थं अपसार्य्य बद्धाः, अलकाश्चूर्णकुन्तला याभिस्ताः। अभिषेकदेवताः स्नानाधिष्ठात्र्यो देव्य इव, स्नानार्थं राज्ञः स्नानविधानार्थं उपतस्थुः उपस्थिता बभूवुः। अत्र स्वभावोक्तिरलङ्कारः, वाच्या जात्युत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः।

(प) ताभिरिति। वारिमध्यप्रविष्टः जलद्रोणीमध्यगतो राजा शूद्रकः, समुन्नतं अतीवोच्चं कुचकुम्भमण्डलं यासां ताभिः, ताभिर्वाराङ्गनाभिः, करिणीभिर्वनकरीव परिवृतः परिवेष्टितः सन् तत्क्षणं तस्मिन् समये रराज। समुन्नतेति विशेषणं उन्नतकुम्भशालिनीनां करिणीनां साम्यप्रतिपादनार्थं। वनकरीति वनपदं तत्र लोकोपद्रवाभावेन परिवेष्टनसम्भवताप्रदर्शनार्थं लोकालये तु लोकोपद्रवेण तथात्वमसम्भवमिति बोध्यम्।

अत्रोपमालङ्कारः। तथा वनकरिणस्तथा शोभायाः सर्वदापि सम्भवात् वनकरी राजते, राजा तु रराज इति कालभेदात् "काप्यभिख्या तयोरासी"दित्यादिदर्पणोदाहृतवदुपमागतभग्नप्रक्रमतादोषः, स च 'वनकरी यथा राजते तथा रराज' इति पाठेन समाधेयः।

(फ) द्रोणीति। अमलस्फटिकेन धवलं स्वच्छस्फटिकमयतया शुभ्रमित्यर्थः।

अत्राप्युपमालङ्कारः। तथा वरुणो राजहंसमारोहति राजा तु आरुरोह इति कालभेदात् पूर्ववद्भग्नप्रक्रमतादोषः, सोऽपि 'वरुणो यथा राजहंसमारोहति तथा राजा स्नानपीठमारुरोह' इति पाठेन समाधेयः।

---

করিয়া এবং আলুলায়িত কেশকলাপ কর্ণের নিকট হইতে অপসারিত করিয়া, জলপূর্ণ কলস গ্রহণপূর্ব্বক মহারাজকে স্নান করাইবার নিমিত্ত অভিষেক-দেবতার ন্যায় চতুর্দ্দিকে উপস্থিত হইল।

(প) উন্নত-কুচকুম্ভশালিনী বারাঙ্গনাগণ, জলদ্রোণীমধ্যপ্রবিষ্ট রাজাকে পরিবেষ্টন করিলে তখন তিনি হস্তিনীপরিবেষ্টিত বনহস্তীর ন্যায় শোভা পাইতেছিলেন।

(ফ) বরুণ যেমন জল হইতে উঠিয়া রাজহংসে আরোহণ করেন, রাজা শূদ্রকও তেমন জলদ্রোণী হইতে উঠিয়া নির্ম্মল ও শ্বেতবর্ণ স্ফটিকময় স্নানপীঠে আরোহণ করিলেন।

---

(१)…चरणाभरणाः

ततस्ताः काश्चि-(१)-न्मरकत-कलस-(२) प्रभाश्यामायमाना नलिन्य इव मूर्त्तिमत्यः पत्रपुटैः, (ब) काश्चिद्रजतकलसहस्ता रजन्य इव पूर्णचन्द्रमण्डल-विनिर्गतेन ज्योत्स्नाप्रवाहेण, (भ) काश्चित् कलसोत्क्षेप-श्रमस्वेदार्द्र-शरीरा जलदेवता इव स्फाटिकैः कलसैस्तीर्थजलेन, (म) काश्चिन्मलयसरित इव चन्दनरसमिश्रेण सलिलेन, (य) काश्चिदुत्क्षिप्त-कलस-पार्श्व-विन्यस्त-हस्त-

---

(ब) तत इति। ता वाराङ्गना राजानमभिषिषिचुरित्यन्वयः। मरकतकलसानां हरिन्मणिमय-कुम्भानां प्रभाभिः श्यामायमाना अश्यामा अपि श्यामवदाचरन्त्यः, अतएव पत्रपुटैः मूर्त्तिमत्यो नलिन्यः पद्मिन्य इव तैः कलसैः राजानमभिषिषिचुः। वेश्यानलिनीनां मरकतकलसपत्रपुटानाञ्च श्यामत्वात् साम्यम्।

अत्र क्यङ्गतोपमा, वेश्यासु नलिनीत्वजात्युत्प्रेक्षया उत्प्रेक्षा च, अनयोरङ्गाङ्गिभावेन सङ्करः।

(भ) काश्चिदिति। रजतकलसहस्ता अतएव पूर्णचन्द्रमण्डलात् विनिर्गतेन ज्योत्स्नाप्रवाहेण रजन्यो रात्रय इव। वेश्यानां रात्रिभिः, रजतकलसस्य पूर्णचन्द्रेण, तत्कलसजलस्य च ज्योत्स्नाप्रवाहेण साम्यमभिप्रेतम्।

अत्रापि वेश्यासु रजनीत्वजात्युत्प्रेक्षालङ्कारः।

(म) काश्चिदिति। कलसोत्क्षेपेण कुम्भोत्तोलनेन यः श्रम आयासस्तेन ये स्वेदा घर्म्मजलानि तैरार्द्राणि शरीराणि यासां ताः, अत एव जलदेवता इव, तासामपि जलादुत्थानेन जलविन्दुव्याप्तशरीरत्वात् साम्यमिति भावः।

अत्रापि ताङ्गणिकासु जलदेवतात्वजात्युत्प्रेक्षालङ्कारः।

(य) काश्चिदिति। मलयसरितो मलयपर्वतस्थनद्य इव चन्दनरसमिश्रजलधारयाऽदिति भावः। अत्रोपमालङ्कारः। केचित्त्वत्रापि मलयसरितां तदानीं स्नानकर्त्तृत्वासम्भवेन तदारोपणादुत्प्रेक्षैवेति वदन्ति।

(र) काश्चिदिति। उत्क्षिप्तानां उत्तोल्य कक्षं नीतानां कलसानां पार्श्वेषु मुखनिम्नदेशेषु विन्यस्ता

---

(ब) তদনন্তর সেই বারাঙ্গনাদিগের মধ্যে কতকগুলি, মরকতমণিময় কলসের প্রভায় প্রায় শ্যামবর্ণ হইয়া তাহার জলে রাজাকে স্নান করাইতে লাগিল, তাহাতে বোধ হইতেছিল যেন, মূর্ত্তিমতী পদ্মিনীগণ পত্রপুট দ্বারা (পাতার ঠোঙা দিয়া) স্নান করাইতেছে। (ভ) কতকগুলি রূপার কলসের জলে স্নান করাইতে লাগিল, সুতরাং প্রতীতি হইতেছিল যেন, রাত্রিগণ পূর্ণচন্দ্রমণ্ডল হইতে নির্গত জ্যোৎস্নার স্রোতে স্নান করাইতেছে। (ম) কতকগুলি কলস উত্তোলনের পরিশ্রমে ঘর্ম্মাক্তকলেবর হইয়া স্নান করাইতে লাগিলে বোধ হইতেছিল যেন, জলদেবতারা স্ফটিকময় কলসে তীর্থ-জলদ্বারা স্নান করাইতেছেন। (য) কতকগুলি মলয়পর্ব্বতস্থিত নদীর ন্যায় চন্দন-মিশ্রিত

---

(१) काश्चिन। (२) मरकतमयकल…।

